त्रिफला च करञ्जश्च वासा रास्ना सबाकुचाः ।
तेषां क्वाथेन कल्केन घृतं सम्यग् विपाचितम् ॥ २७५ ॥

पानेन सर्वकुष्ठानि नाशयत्यचिरादिदम् ।
क्षारेण राजहंसस्य पूतिकीटः समन्वितः ॥ २७६ ॥

लेपाच्छ्वित्रं निहन्त्याशु कुर्याच्च समवर्णताम् ।
अत्यर्थं सेवितैर्वायुर्धातूनां क्षयकारकैः ॥ २७७ ॥

कुपितः कुरुते व्याधीन् सकम्पान् शूलपूर्वकान् ।
कोकिलाक्षक[षा]यस्य पानात् तच्छाकभोजिनः ॥ २७८ ॥

तद्वारिणा च स्नानस्य वातव्याधिर्विनश्यति ।
शुण्ठी रास्ना चित्रकं च देवदारु सहाचरम् ॥ २७९ ॥

एषां क्वाथं तैलमिश्रं पिबेद् वातरुजापहम् ।
रक्तं मद्यप्रसङ्गेन पटुनाऽतिविदाहिना ॥ २८० ॥

आतपाप्लवनाद् रूक्षाद् यानाद् व्यायामसेवनात् ।
वायुना प्रेरितं तच्च नससन्धिः (?) प्रवर्तते ॥ २८१ ॥

सर्वेभ्यो रोमकूपेभ्यः स व्याधिर्वातशोणितः ।
अमृताया रसः क्वाथः कल्कं चूर्णमथापि वा ॥ २८२ ॥

बहुकालस्थितं वातशोणितं नाशयेद् द्रुतम् ।
इक्षुद्राक्षा च सौवीरं मस्तु मद्यं तुषोदकम् ॥ २८३ ॥

शर्कराक्षौद्रसम्मिश्रं पारिसेके प्रशस्यते ।
रोगे रक्तानिले जाते सर्वाङ्गव्यापकेऽसृजि ॥ २८४ ॥

सिरामोक्षः प्रकर्तव्यः स्नेह-स्वेदपुरस्सरः ।
गाढं निपीड्य गात्राणि यन्त्रणैर्विविधैरपि ॥ २८५ ॥

कुष्ठायां व्रीहिवक्त्रेण सिरां विध्येद् ऋजुगताम् ।
[illegible]

मणिबन्धे चाङ्गुलन्यौ कूर्पकुके गुल्कमूर्धनि ।
हरेत् शादेषिकं शृङ्गैर्ग्रथितं वारिजन्मभिः ॥ २८७ ॥

मेदोग्रन्थीन् छितैः शस्त्रैः पाटयित्वा समुद्धरेत् ।
महद्वामश्मरीं शस्त्रैः पाटयित्वा बहिः क्षिपेत् ॥ २८८ ॥

गुदमध्येऽङ्गुलीं क्षिप्त्वा मध्यमां परिवर्तयेत् ।
अश्मरीमानयेद् युक्त्या बस्त्युपान्तं विचक्षणः ॥ २८९ ॥

उच्छूनां तां परिज्ञाय छिन्द्यात्छस्त्रेण लाघवात् ।
कुलत्थमश्मभेदं च गोक्षुरं क्वाथयेज्जले ॥ २९० ॥

तच्चूर्णं पाययेत् प्राज्ञो हरेत् तेनापि चाश्मरीम् ।
एवमन्येषु [1]रोगेषु दोषो यत्राधिको भवेत् ॥ २९१ ॥

तस्य दोषस्य कुर्वीत चिकित्सां मतिमान् भिषक् ।

॥ इति वैद्यकम् ॥

औषधपर्यायानाह—यवासो दुरालभा । कटुका तिक्ता । सारिवा सुगन्धिः । धन्वयवासो यवस्वी दुरालभा । कण्टकमूली बृहतीद्वयं शालिपर्णी पृश्निपर्णी गोक्षुरम् । कायस्था काकमाची । नाकुली कात्कुलिका । वयस्था धात्री । चोरकः ग्रन्थिपर्णी । शिला मनःशिला । कालया दार्वी । अनन्ता दुरालभा । श्यामा कृष्णा । त्रिवृद् अरुणं त्रिवृत् । औषधं शुण्ठी । वटशुङ्गः अविकासितपल्लवः । वृक्षाम्लः तिन्तिडीकः । कोलः बदरः । शृङ्गी कर्कटकशृङ्गी । पीलु कर्णाटे गोंबुः । एरण्डः रुबुकश्च पञ्चाङ्गुलकः । विषा अतिविषा । माणिमन्थं सैन्धवम् । बिल्वः श्रीपर्णी । काश्मर्या तर्कारी । टक्की तुण्डुकः कर्णाटे तुडुलुः । महापद्ममूलम् । शमीकका शतावरी । वृश्चिकः कर्णाटे वेलाडके । सैन्धवं सौवर्चलं बिडं काचः समुद्रः । पुत्रस्था दुग्धी । रामठं हिङ्गु । ऊषणं मरीचम् । महौषधं शुण्ठी । वासा वाजरूपकः । इत्यौषधनिघण्टुः ॥ ३०० ॥

---

1 B दोषेषु । 2 [illegible]

पितृपक्षसमुद्भूता मातृपक्षसमुद्भवाः ।
आत्मसम्बन्धिनो ये च बान्धवास्ते प्रकीर्तिताः ॥ १०१ ॥

बन्धूनां मधुरं वाक्यं यथायोग्यं सहासनम् ।
संविभागश्च कर्तव्यः सुवर्णाम्बर-भूषणैः ॥ १०२ ॥

वेतनाः किङ्करा दास्यो दासाः कर्मकरास्तथा ।
बुद्धिखड्गसहायाश्च भृत्यास्ते परिकीर्तिताः ॥ १०३ ॥

एतेषां रक्षणं सम्यक् तथा भरणपोषणम् ।
दानं सम्माननं कार्यं लोकद्वयहितैषिणा ॥ १०४ ॥

इति दीनानाथार्त-बन्धु-भृत्यपोषणाध्यायः ॥ १९ ॥

व्याघ्र-सिंह-गजैश्चोरैः शत्रुभिश्चापि विद्रुतः ।
भयाच्छरणमायातः शरणागत उच्यते ॥ १०५ ॥

रक्षेच्छरणमायातं प्राणैरपि धनैरपि ।
स यशो महदाप्नोति जनैः सर्वैः प्रपूज्यते ॥ १०६ ॥

कपोतो शिबिसंयुक्ता पोतसत्त्वस्य रक्षणम् ।
तुलया तोलितं तत्र प्राणत्राणं विविच्यते ॥ १०७ ॥

इति शरणागतरक्षाध्यायः ॥ २० ॥

राज्यप्राप्तेर्नृपकुलभुवामित्युपायोपदेशः
सम्यक् सोमेश्वरनृपतिना गर्भसारस्थितेन ।
चक्रे चन्द्रप्रतिमयशसा रञ्जनाय प्रजानां
पुण्यौघानामपि च महतां वृद्धये शु(बु)द्धये च ॥ १०८ ॥

इति श्रीमहाराजाधिराजसत्याश्रयकुलतिलक—चालुक्याभरण—श्रीमद्भूलोकमल्ल-
श्रीसोमेश्वरदेवविरचितेऽभिलषितार्थचिन्तामणौ मानसोल्लासे
राज्यप्राप्तेर्हेतूपायकथनं प्रथमं प्रकरणम् ।

## द्वितीयं प्रकरणम् ।

राज्यप्राप्तिनिमित्तानि कथितानीह विंशतिः ।
तत्स्थिरीभावमुद्दिश्य कारणानि वदाम्यहम् ॥ १ ॥

सत्यं सत्त्वं कुलं शीलं तारुण्यं च सुरूपता ।
दाक्षिण्यमविसंवादो वृद्धसेवा कृतज्ञता ॥ २ ॥

अक्षुद्रपरिवारत्वं बुद्धिर्दैवसहायता ।
वश्यसामन्तता शक्तिर्दक्षत्वं क्षिप्रकारिता ॥ ३ ॥

शौर्यं धैर्यं क्षमौदार्यं शुचित्वं प्रियवादिता ।
वयोमित्वमनिर्वेदः सर्वदा धर्मकारिता ॥ ४ ॥

जनानुरागः सौभाग्यं शास्त्रशस्त्रनैपुणम् ।
विवेको दृढचित्तत्वं कलाकुशलता धनम् ॥ ५ ॥

दोषानुरूपदण्डत्वं सर्वसत्त्वहितैषिता ।
दयालुत्वं प्रसन्नत्वं भृत्यानां सुखदर्शिता ॥ ६ ॥

आर्जवं तत्त्वदर्शित्वं सदोत्साहो नयज्ञता ।
मङ्गलाचार इत्येतैर्गुणैर्युक्तो वरो नृपः ॥ ७ ॥

सत्यं शौर्यं क्षमा दानं पञ्चमी स्याद् गुणज्ञता ।
अवश्यकभाविनः पञ्च गुणास्त्वेते महीभुजाम् ॥ ८ ॥

विभूतिं च तथा कीर्तिं धर्मं च विजयं सुखम् ।
यद्यमेत् सततं राजा गुणानेतान् विचारयेत् ॥ ९ ॥

इति राजगुणाः ॥

राज्यं पथ्याशिना नित्यं नीरुजो जायते ततः ।
व्याधिभिर्वर्जितो [illegible]

वलिभिः पलितैर्युक्तो रूपेण रहितो भवेत् ।
स्त्रीजनैर्भृत्यवर्गैश्च भूपतिश्चावमन्यते ॥ ११ ॥

तस्माद् रसायनान् योगान् यत्नात् सेवेत पार्थिवः ।
दृढगात्रो भवेत् तेन वलीपलितवर्जितः ॥ १२ ॥

जीवेच्च सुचिरं कालं राजा रोगविवर्जितः ।
तस्माद् रसायनं वक्ष्ये नृपाणां हितकाम्यया ॥ १३ ॥

रसायनक्रिया द्वेधा कथिता पूर्वसूरिभिः ।
कुटीप्रवेशनादेका वातातपसहा परा ॥ १४ ॥

कुटीप्रवेशिका वर्ज्या लोकरक्षापरैर्नृपैः ।
वातातपसहा सेव्या राजकार्याविनाशिनी ॥ १५ ॥

कृष्णपक्षत्रयोदश्यां सन्ध्यायां शाल्मलीतरुम् ।
बलि-पूजादिकं कृत्वा रक्तसूत्रेण वेष्टयेत् ॥ १६ ॥

'ॐ ह्रां अमृतस्यन्दिनी अमृतं स्रव स्वाहा'

सप्तकृत्वः प्रयुक्तेन मन्त्रेणानेन शाल्मलीम् ।
अभिमन्त्र्य कुठारेण हन्याद् वारान् बहून् सुधीः ॥ १७ ॥

तस्या निर्यासमादाय प्रभाते भास्करोदये ।
धात्र्या भृङ्गलतायाश्च गुडूच्याः स्वरसैः पृथक् ॥ १८ ॥

सप्त वारान् प्रतिरसं तेन भावनमाचरेत् ।
सञ्चूर्ण्योलूखले कुर्याद् गुटिका बदरैः समाः ॥ १९ ॥

प्रतिवासरमेकैकां धारयेद् गुटिकां मुखे ।
अह्नां द्विसप्तके याते [illegible] रदना नखाः ॥ २० ॥

सञ्जायन्ते ततः केशा [illegible] ।
[illegible]

समासहस्रजीवी स्यान्नात्र कार्या विचारणा ।
मूल-त्वक्-पत्र-पुष्पाणि फलमित्यङ्गपञ्चकम् ॥ २२ ॥

आहृत्य शाल्मलीवृक्षात् सूक्ष्मचूर्णं तु कारयेत् ।
मधुना सर्पिषा युक्तं बिडालपदमात्रकम् ॥ २३ ॥

तल्लिहेत् प्रातरुत्थाय मासमेकं हिताशनः ।
मासेन जायते तेन वलीपलितवर्जितः ॥ २४ ॥

मासद्वयप्रयोगेण मत्तेभबलभाग् भवेत् ।
जीवत्यब्दसहस्राणि तेजस्वी तरुणाकृतिः ॥ २५ ॥

नीरुजो वीर्यसम्पन्नो नात्र कार्या विचारणा ।
पुष्यार्कदिवसे याते हस्तिकर्णीं समाहरेत् ॥ २६ ॥

छायाशुष्कां प्रकुर्वीत समूलां चूर्णयेत् ततः ।
वाससा गालितं सूक्ष्मं मधु-सर्पिःसमायुतम् ।
स्निग्धभाण्डे निधायाथ धान्यराशौ निगूहयेत् ॥ २७ ॥

एकविंशे दिने याते समुद्धृत्य तदौषधम् ।
पलं पलं प्रतिदिनं भक्षयेदवतन्द्रितः ॥ २८ ॥

यावद् दिनशतं याति तावदन्नं विवर्जयेत् ।
क्षीरयूषसमायुक्तं भुञ्जीत मधुरं लघु ॥ २९ ॥

वर्षपोडशदेशीयो मेधावी कोकिलस्वरः ।
योजनानां शतं याति दिनेनैकेन मानवः ॥ ३० ॥

नवनागबलोपेतो जीवेदब्दसहस्रकम् ।
हस्तिकर्णीप्रयोगेण निश्चितं मयभाषितम् ॥ ३१ ॥

सितां रक्तां च पीतां च कृष्णां मुण्डिं चतुर्विधाम् ।
पञ्चकर्णां [illegible]

रोहिण्यां श्रवणे पुष्ये रेवत्यां वा समुद्धरेत् ।
पञ्चाङ्गानि समाहृत्य छायायां परिशोषयेत् ॥ ३३ ॥

सर्पिषा मधुना सार्द्धं बिडालपदमात्रकम् ।
तच्चूर्णमुपयुञ्जीत क्षीरषष्टिकभोजनः ॥ ३४ ॥

एकविंशे दिने याते दिव्यदेहो भवेन्नरः ।
मासत्रयप्रयोगेण पुमान् प्राप्नोत्यदृश्यताम् ॥ ३५ ॥

पञ्चमासप्रयोगेण मोदते विबुधैः सह ।
मासषट्कप्रयोगेण चिरायुः खेचरो भवेत् ॥ ३६ ॥

श्वेतस्य अर्कवृक्षस्य पत्रं पुष्पं फलं हरेत् ।
शोषयित्वा तु तच्चूर्णं भक्षयेन्मधुसर्पिषा ॥ ३७ ॥

सप्तरात्रप्रयोगेण वलीपलितवर्जितः ।
द्व्यष्टवर्षाकृतिर्धन्यो जीवेद्वर्षशतत्रयम् ॥ ३८ ॥

शबरीं पुष्यनक्षत्रे समूलां पञ्चाम्बिनाम् ।
शोषयित्वा तु तच्चूर्णं शुद्धकायः प्रयत्नवान् ॥ ३९ ॥

सर्पिषा मधुना सार्द्धं भक्षयेत् कर्षमात्रकम् ।
गव्यक्षीरसमायुक्तं कुर्याच्छाल्यन्नभोजनम् ॥ ४० ॥

ज्वराः सर्वे विनश्यन्ति मुखरोगा जलग्रहः ।
चक्षुः-श्रोत्रभवा रोगः सर्वशूलं प्रशाम्यति ॥ ४१ ॥

कण्डूतिः पिटको दाहः कुष्ठं लूता भगन्दरः ।
प्रमेहो जठरो गुल्मः क्षयोऽपस्मार एव च ॥ ४२ ॥

सप्ताहे प्रथमे याते नश्यन्त्येता रुजः स्फुटम् ।
मासे द्वितीयसप्ताहे दिव्यदेहो भवेन्नरः ॥ ४३ ॥

तृतीये भूतलस्थानि निधानान्यपि पश्यति ।
चतुर्थे कुञ्चिता नीला जायन्तेऽस्य शिरोरुहाः ॥ ४४ ॥

समासहस्रत्रितयं जीवेत् तारुण्यसंयुतः ।
पञ्चमे गन्धनीरजगन्धं गात्रे वहत्यलम् ॥ ४५ ॥

षष्ठे वाचस्पतिप्रख्यः प्रज्ञावान् जायते नरः ।
सप्तमे पूर्णचन्द्राभः सर्वाह्लादकरो भवेत् ॥ ४६ ॥

अष्टमे सर्वसत्त्वानां पीयूषं वितरत्यसौ ।
सप्तद्वीपाधिपत्यं च नवमे सप्तके भवेत् ॥ ४७ ॥

भूतं भव्यं भविष्यं च दशमे वेत्ति सप्तके ।
अश्रुतान्यपि शास्त्राणि जानात्येकादशे नरः ॥ ४८ ॥

द्वादशे सप्तके प्राप्ते द्वितीय इव मन्मथः ।
वशीकरोति सर्वाणि नर-नारीमनांस्यपि ॥ ४९ ॥

संवत्सरोपयोगेन समालक्षत्रयं सुखी ।
जरापलितमुक्ताङ्गो जीवत्येव न संशयः ॥ ५० ॥

एवं रसायनं प्रोक्तमव्याधिकरणं नृणाम् ।
नृपाणां हितकामेन सोमेश्वरमहीभुजा ॥ ५१ ॥

इति रसायनम् । इति स्वाम्यध्यायः ॥ १ ॥

कुलीनाः श्रुतसंपन्नाः शुचयश्चानुरागिणः ।
शूरा धीराश्च नीरोगा नीतिशास्त्रविशारदाः ॥ ५२ ॥

प्रगल्भा वाग्मिनः प्राज्ञा रागद्वेषविवर्जिताः ।
वैराणां चाप्यकर्तारः सचिवाः स्युर्विभूतये ॥ ५३ ॥

सत्यसन्धा महात्मानो दृढचित्ता निरामयाः ।
जनानां सम्मता दक्षाः सचिवा नृपसन्मते ॥ ५४ ॥

सक्ता राजकार्येषु रागद्वेषविवर्जिताः ।
आय-व्यये च निपुणाः सचिवाः कोशवृद्धये ॥ ५५ ॥

अमार्गे वर्तमानस्य नृपस्य प्रतिकूलगाः ।
बोधयन्तः प्रियैर्वाक्यैः सचिवाः स्युर्नृपर्द्धये ॥ ५६ ॥

अन्वयादागतान् शुद्धानुपधाभिः परीक्षितान् ।
सचिवान् सप्त चाष्टौ वा कुर्वीत मतिमान् नृपः ॥ ५७ ॥

स्वदेशजाताः सत्यज्ञा ऊहापोहविचक्षणाः ।
देशकालविदो धीराः साध्यासाध्यविवेकिनः ॥ ५८ ॥

परेङ्गितज्ञा धीमन्तः स्वाकारस्य निगूहकाः ।
मन्त्रसंरक्षकाश्चाप्ता मन्त्रिणः स्युर्महीपतेः ॥ ५९ ॥

इति मन्त्रिलक्षणम् ॥

त्रय्यां च दण्डनीत्यां च शान्तिकर्मणि पौष्टिके ।
आथर्वणे च कुशलः स स्याद् राजपुरोहितः ॥ ६० ॥

इति पुरोहितलक्षणम् ॥

षोडशभिर्हीना षष्टिः प्रभवाद्यब्दसंयुता ।
तानैरपि समायुक्ता शकभूपोद्गताः समाः ॥ ६१ ॥

एकपञ्चाशदधिके सहस्रे शरदां गते ।
शकस्य सोमभूपाले सति चालुक्यमण्डने ॥ ६२ ॥

समुद्ररशनामुर्वी शासति क्षतविद्विषि ।
सर्वशास्त्रार्थसर्वस्वपाथोधिकलशोद्भवे ॥ ६३ ॥

सौम्यसंवत्सरे चैत्रमासादौ शुक्रवासरे ।
परिशोधितसिद्धान्तलक्ष्माः स्युर्ध्रुवका इमे ॥ ६४ ॥

षड्वारा घटिकाः सप्त पलान्यपि च विंशतिः ।
भानि षड्विंशं ६ चैकचत्वारिंशच्च नाडिकाः ॥ ६५ ॥

प्रतिमासं क्षिपेद् वारं द्वात्रिंशन्नाडिकास्तिथौ ।
नक्षत्रे द्वे पदे द्वे च नाड्यश्चैकादशापराः ॥ ६६ ॥

योज्यास्त्याड्याः पुनर्योज्या वारे नाडीषु पिण्डके ।
नक्षत्रे च पुनर्योज्यास्तिथिरेतावता भवेत् ॥ ६७ ॥

तिथौ वारेण संयुक्ते सप्तभिश्च विभाजिते ।
अवशिष्टो भवेद् वार एवं वारविनिर्णयः ॥ ६८ ॥

पदे युक्तं तिथौ भागं चतुर्दशभिराहरेत् ।
चतुर्दशावधि ज्ञेयं धनं शिष्टमृणं भवेत् ॥ ६९ ॥

आद्ये त्रयोदशे पञ्च द्वितीये द्वादशे दश ।
एकादशे तृतीये च नाड्यः पञ्चदश स्मृताः ॥ ७० ॥

चतुर्थे दशमे तु स्यादेकोना विंशतिस्तु ताः ।
पञ्चमे नवमे नाड्यो द्वाविंशतिरुदीरिताः ॥ ७१ ॥

षष्ठेऽष्टमे च घटिकाश्चतुर्विंशतिरीरिताः ।
सप्तमे घटिका ज्ञेयाः सङ्ख्यया पञ्चविंशतिः ॥ ७२ ॥

मकरे सूर्यघटिकास्तिस्रः षट् च प्रवेशयेत् ।
कर्कटेऽप्येवमेव स्याद् घटिकास्तु वियोजयेत् ॥ ७३ ॥

कुम्भे द्वादश विज्ञेयाः संयोज्या रविनाडिकाः ।
तावत्यो घटिका सिंहे रेचनीया विचक्षणैः ॥ ७४ ॥

मीने रुद्राश्च रुद्राश्च योज्याः सूर्यस्य नाडिकाः ।
तावत्य एव कन्यायां स्फोटनीया मनीषिभिः ॥ ७५ ॥

मेषे रुद्रा द्विघ्नो नाड्यो मेलनीया धनाभिधाः ।
तुलायां नाडिकास्तास्तु धारणीया ऋणाभिधाः ॥ ७६ ॥

वृषेऽष्टौ षट् च नाड्यः स्युर्मिश्रणीया विपश्चिता ।
अपसार्यास्तु ता नाड्यो वृश्चिके परिकीर्तिताः ॥ ७७ ॥

युग्मे तिस्रश्च शून्यं च पठयेद् गणकोत्तमः ।
तद्वेव धारयेद् राशौ कोदण्डाख्ये विचक्षणः ॥ ७८ ॥

रविताः संश्वस्तेऽत्र चतुर्भिर्गुणयेत् तिथिम् ।
तृतीयं तु तिथेर्भागं नक्षत्रघटिका अपि ॥ ७९ ॥

धनाख्या रविनाड्योऽत्र योज्यास्ताभ्यो ऋणाभिधाः ।
संयोज्य विभजेत् षष्ट्या त्वर्धवृत्तेन योजयेत् ॥ ८० ॥

वक्ष्यामि शशिनक्षत्रं सूर्यर्क्षे योजयेत् तिथिम् ।
तिथिं सङ्गुणयेत् षड्भिर्योजयेत् निधिनाडिभिः ॥ ८१ ॥

शोध्यं तद् रविनाडीषु ततः शशिभमाप्यते ।
शशि-रवियोगे योगो नाडियोगस्य नाडिकाः ॥ ८२ ॥

हन्याद् द्वाभ्यां तिथिं तत्र त्याज्यमेकं ततो घटीः ।
दिनस्य स्फोटयेत् तत्र सप्तभिः परिभाजिते ॥ ८३ ॥

करणं जायते शिष्टं शुक्लिः सूर्योदयात् पुरः ।
करणं घटिकाभिस्तद्दिने पञ्चाङ्गनिर्णयः ॥ ८४ ॥

इति पञ्चाङ्गनिर्णयः ॥

अनेन विधिनाऽऽनीय तिथिवारसमन्वितम् ।
नक्षत्रं च तथा योगं करणं गणकोत्तमः ॥ ८५ ॥

अभिषेके पट्टबन्धे विवाहे जातकादिषु ।
गृहप्रवेशे यात्रायां गृहारम्भे च सङ्गरे ॥ ८६ ॥

शुक्ले चन्द्रबलं मुख्यं कृष्णे ताराबलाबलम् ।
शतानि पञ्च दोषाणां बुधो हन्ति विनिश्चितम् ॥ ८७ ॥

शुक्रः पञ्च सहस्राणि दोषाणां हन्ति निश्चितम् ।
लक्षमेकं तु दोषाणां सुराचार्यो व्यपोहति ॥ ८८ ॥

एवं ग्रहबलं ज्ञात्वा दुर्बलत्वं च पापिनाम् ।
सर्वं यः कथयेत् सम्यक् स कार्यो गणको नृपैः ॥ ८९ ॥

इति ज्योतिर्विद्-गणकलक्षणम् ॥

कुलजः शीलवान् धीरश्चतुर्भाषाविशारदः ।
गजाश्वारोहणे दक्षः शस्त्र-शास्त्रविचक्षणः ॥ ९० ॥

शकुने च निमित्ते च चिकित्सायां च वेदिता ।
व्यूहभेदविधानज्ञः सारेतरविशेषवित् ॥ ९१ ॥

दाता प्रियंवदो दान्तो मतिमान् दृढनिश्चयः ।
राज्ञा सेनापतिः कार्यः शूरो भृत्यविशेषवित् ॥ ९२ ॥

इति सेनापतिलक्षणम् ॥

स्मृतिशास्त्रार्थकुशला रागद्वेषविवर्जिताः ।
धर्माधिकारिणः कार्या निर्लोभा भयवर्जिताः ॥ ९३ ॥

स्मार्त्तैः सह समालोच्य यथोक्तं दण्डमाचरेत् ।
शक्तो राज्ञा विचारज्ञः कार्यो दण्डधरो द्विजः ॥ ९४ ॥

इति धर्माधिकारिसभाध्यक्षलक्षणम् ॥

लोहवस्त्राजिनादीनां रत्नानां च विभेदवित् ।
क्रये च तद्विशेषज्ञो रक्षणे निपुणः शुचिः ॥ ९५ ॥

अनाहार्यः सुसन्तुष्टश्चाप्तो बहुकुटुम्बकः ।
सावधानो गणितविद् भाण्डागारे नियोजयेत् ॥ ९६ ॥

एकाद्या नवपर्यन्ता नवैकाङ्काः स्वरूपतः ।
दशोत्तरक्रमेणैते वर्धन्ते बिन्दुवर्धिताः ॥ ९७ ॥

बिन्दुरेको दशस्थाने शते बिन्दुद्वयं भवेत् ।
बिन्दुत्रयं सहस्रे स्यादयुते तच्चतुष्टयम् ॥ ९८ ॥

बिन्दवः पञ्च लक्षे स्युः प्रयुते बिन्दवस्तु षट् ।
बिन्दवः सप्त कोटौ स्युरर्बुदे चाष्ट बिन्दवः ॥ ९९ ॥

बिन्दवो नव पद्मे स्युः खर्वे स्युर्दश बिन्दवः ।
एकादश निखर्वे तु द्वादश स्युर्महाम्बुजे ॥ १०० ॥

शङ्खे त्रयोदश प्रोक्ताः समुद्रे मनुबिन्दवः ।
अन्त्यसंज्ञे समाख्याता बिन्दवस्तिथिसंज्ञया ॥ १०१ ॥

द्विरष्ट बिन्दवो मध्ये परार्धे दश सप्त च ।
एवमष्टादशस्थानं गणितं व्यावहारिकम् ॥ १०२ ॥

एकाङ्के बिन्दुरेकश्चेद् दशकं तत् प्रकीर्तितम् ।
द्वितीयाङ्के पुरो बिन्दौ सङ्ख्या विंशतिरिष्यते ॥ १०३ ॥

एवं तृतीयाद्यङ्केषु बिन्दुः स्यात् पुरतो यदि ।
त्रिंशदाद्या तदा सङ्ख्या नवत्यन्ता प्रकीर्तिता ॥ १०४ ॥

शताधिके परार्धान्ते यावन्तो बिन्दवः स्थिताः ।
यस्याङ्कस्य पुरोभागे तावत्सङ्ख्या तु सा भवेत् ॥ १०५ ॥

अङ्काः कतिपये स्थाप्या गुणनीयतया स्थिताः ।
अग्रस्थात् प्रथमाङ्कस्य गुणकाख्याङ्कमालिखेत् ॥ १०६ ॥

एकैकं गुणयेत् सर्वकपरिस्थमधस्तनः ।
लब्धं निवेशयेत् तत्र स्वाङ्कस्योपरि लेखयेत् ॥ १०७ ॥

एकादिगुणने योज्या बुधैरङ्का विपर्ययात् ।
लब्धं तु दशकस्थानं पूर्वेणाङ्केन योजयेत् ॥ १०८ ॥

गुणाकारक्रमणादावङ्कान् कतिपयान् न्यसेत् ।
विभाजकानधस्तेषां सुसमं विन्यसेद् बुधः ॥ १०९ ॥

अधोऽङ्कं हृदये कृत्वा तर्कयेदङ्कमूर्ध्वगम् ।
विभागो लभ्यते येन तेन भागं प्रकल्पयेत् ॥ ११० ॥

अनेन क्रमयोगेन भजनीयं विभाजयेत् ।
एकत्र स्थापयेल्लब्धमवशिष्टं तथाऽन्यतः ॥ १११ ॥

अवशिष्टं पुनर्भक्त्वा यथाभागानुसारतः ।
लब्धे तु मेलयेत् तत् तु भागहारोऽयमीदृशः ॥ ११२ ॥

प्रमाणं फलमिच्छेति राशित्रितयमुच्यते ।
इच्छया गुणितं वस्तु प्रमाणेन विभाजयेत् ॥ ११३ ॥

प्रमाणं द्रव्यमाख्यातं फलं द्रविणमिष्यते ।
द्रव्यजातिविभागोन्यामिच्छामिच्छन्ति सूरयः ॥ ११४ ॥

त्रैराशिकमिदं प्रोक्तं गणितं गणकोविदैः ।
पञ्चराशिकमत्रैव सप्तराशिकमेव च ॥ ११५ ॥

नवराशिकमप्यस्मिन् ज्ञेयं त्रैराशिके विधौ ।
सकलं गणितं प्रोक्तं सङ्क्षेपेण प्रसङ्गतः ॥ ११६ ॥

वक्ष्यामि गणितं भिन्नमुद्देशे खण्डितं हि यत् ।
रूपमंशास्तथा च्छेदो नामैतद् व्यावहारिकम् ॥ ११७ ॥

रूपमूर्ध्वमधश्चांशस्तस्याधः छेद इष्यते ।
राशिद्वयं प्रकर्तव्यं गुण्यं गुणकमेव च ॥ ११८ ॥

संपूर्णं कथ्यते रूपमंश उद्धरितो भवेत् ।
तस्यांशस्य विभागो यः स च्छेदः परिकीर्तितः ॥ ११९ ॥

गुणयेदंशमंशेन च्छेदं छेदेन बुद्धिमान् ।
फलांशं विभजेत् तज्ज्ञः फलेन च्छेदजन्मना ॥ १२० ॥

गुणनं भिन्नमाख्यातं भिन्नभागोऽभिधीयते ।
रूपांशच्छेदमार्गेण भाज्यो राशिर्विधीयते ॥ १२१ ॥

भाजकश्च तथा चान्यो राशिर्लेख्यो विपश्चिता ।
छेदेन गुणयेद् रूपं लब्धमंशेन मेलयेत् ॥ १२२ ॥

छेदेनांशं विपर्यासाद् गुणयेद् राशियुग्मके ।
भाजकेन भजेद् भाज्यं भिन्नभागोऽयमीदृशः ॥ १२३ ॥

इति गणितम् ॥

इत्थं गुणकारं च भागहारं च तत्त्वतः ।
त्रैराशिकविधानं च यो जानाति विनिश्चितम् ॥ १२४ ॥

अलुब्धः सावधानश्च रागद्वेषविवर्जितः ।
स राज्ञा गणकः कार्यः कोशे राष्ट्रे च धीमता ॥ १२५ ॥

इति कोशाध्यक्षगणकलक्षणम् ॥

उन्नतो रूपवान् दक्षः प्रियवाग् दर्पवर्जितः ।
ग्राही चित्तस्य सर्वेषां प्रतीहारः प्रशस्यते ॥ १२६ ॥

इति प्रतीहारलक्षणम् ॥

प्रगल्भो मतिमान् दक्षः सर्वभाषाविशारदः ।
सन्धि-विग्रहतत्त्वज्ञो लिपिज्ञोऽक्षरवाचकः ॥ १२७ ॥

सामन्तमण्डलेशानां मान्यकानां विशेषतः ।
आवाहने विसर्गे च स्थापने निपुणो भृशम् ॥ १२८ ॥

षाड्गुण्यविधितत्त्वज्ञो देश-काल-विभागवित् ।
आय-व्ययौ च लोकं च देशोत्पत्तिं च वेत्ति यः ॥ १२९ ॥

अर्थरक्षापरो भृत्यः कृत्याकृत्यविवेकवित् ।
सान्धिविग्रहिकः कार्यो राज्ञा कार्यविशारदः ॥ १३० ॥

इति सान्धिविग्रहिकलक्षणम् ॥

सर्वदेशलिपिज्ञाता लेखने कुशलः पटुः ।
अधीतो वाचको धीमान् योग्यो राज्ञा स लेखकः ॥ १३१ ॥

इति लेखकलक्षणम् ॥

आयुर्वेदविदश्वानां निमित्त-शकुनादिवित् ।
शिक्षावेदी तुरङ्गाणां भूमिभागविशारदः ॥ १३२ ॥

चक्रावक्रस्थाभिज्ञः प्रियवाक् प्रियदर्शनः ।
कृतविद्यश्च शूरश्च सारथी पार्थिवोचितः ॥ १३३ ॥

इति सारथिलक्षणम् ॥

असम्भेद्यः शुचिर्दक्षः कृतान्नस्य परीक्षकः ।
सूदानां च विशेषज्ञः सूदाध्यक्षो विधीयते ॥ १३४ ॥

कुलक्रमसमायातास्तुष्टेष्टाश्चानुकारिणः ।
कृत्तकेशनखा दान्ताः पराभेद्या नृपे रताः ॥ १३५ ॥

अन्न–पानविशेषज्ञा मांसपाकविशारदाः ।
शाक–पाककलादक्षाः पक्वान्नकरणे बुधाः ॥ १३६ ॥

पानव्यञ्जनतत्त्वज्ञाः खण्डपाकस्य वेदिनः ।
क्षीरप्रकारबोद्धारः सूदाः कार्या महीभुजा ॥ १३७ ॥

इति सूदलक्षणम् ॥

नराणां च गजानां च वाजिनां च गवामपि ।
मृगाणां च खगानां च ये जानन्ति चिकित्सितम् ॥ १३८ ॥

परं पारङ्गताः सम्यगष्टाङ्गे तु चिकित्सिते ।
शल्यकर्मकलादक्षा मन्त्रे तन्त्रे च कोविदाः ॥ १३९ ॥

देहे शिरसि बाले तु विषे शल्ये ग्रहेऽपि च ।
वृषे रसायने चैव कुशला भिषजोऽष्टसु ॥ १४० ॥

रोगनामनिदानं तु कर्म जानन्ति तत्त्वतः ।
औषधं रूप-नामभ्यां जानन्तो भिषजो वराः ॥ १४१ ॥

वमौ विरेचने नस्ये बस्तौ रक्तक्रियास्वपि ।
कुर्वन्ते भिषजः सम्यङ् निष्णाताः पञ्चकर्मसु ॥ १४२ ॥

यत् किञ्चिदौषधैः साध्यं शरीरेषु हिताहितम् ।
सम्यग् विदन्ति ये वैद्या नृपयोग्या भवन्ति ते ॥ १४३ ॥

कृच्छ्रसाध्यमसाध्यं वा साध्यं जानन्ति तत्त्वतः ।
देशं कालं वयोऽवस्थां प्रकृतिसात्म्यमेव च ॥ १४४ ॥

असाध्याः परकीयाणामात्मस्वामिहिते रताः ।
धर्मज्ञा रसविज्ञाश्च वैद्याः कार्या महीभुजा ॥ १४५ ॥

इति वैद्यलक्षणम् ।

विरूपो लोभहीनश्च सावधानो जितेन्द्रियः ।
इङ्गिताकारकुशलः शुद्धान्ताध्यक्ष इष्यते ॥ १४६ ॥

मुक्तकामोपधाः[1] शुद्धाः सुरूपाः कृतबुद्धयः ।
अन्तःपुररक्षकाः कार्या नृपेण शुचियोनयः ॥ १४७ ॥

धर्मज्ञाः शुचयो धीराः भूपभक्ता जितेन्द्रियाः ।
कार्या राज्ञा कुमाराणामध्यक्षाः स्युः परीक्षिताः ॥ १४८ ॥

कर्मस्वन्येषु सर्वेषु दक्षाश्च शुचयस्तथा ।
शूराश्च बुद्धिमन्तश्च शस्त्र-शास्त्रकलाविदः ॥ १४९ ॥

योग-क्षेमप्रसाधार्थं दुष्टसंयमनाय च ।
आत्मनश्च विनोदाय राज्ञा योज्या यथार्हतः ॥ १५० ॥

इत्यन्तःपुररक्षक-कुमारपरिचारकलक्षणम् ॥

इत्यमात्याध्यायः ॥ २ ॥

वर्धते भूगुणैर्देशो देशवृद्धिर्नृपर्द्धये ।
भूमीं गुणवतीं तस्मादावसेद् भूतये नृपः ॥ १५१ ॥

---

१ B सक्तकामोपधाः ।

सर्वसस्यवती सेव्या खनिद्रविणगर्भिणी ।
पशव्या बहुपानीया पुण्यवद्भिर्जनैर्युता ॥ १५२ ॥

स्तम्बेरमवनोपेता बहूपाना सुशोभना ।
भूर्नदीमातृका ख्याता सर्वदा धरणीभुजाम् ॥ १५३ ॥

ईदृग्भूमियुतं राष्ट्रं महापत्तनभा[सि]तम् ।
पालनाद् वर्धयेद् राजा स्वकोशस्याभिवृद्धये ॥ १५४ ॥

स्वराष्ट्रे पालयेद् राजा प्रजाः पुत्रानिवौरसान् ।
चौरेभ्योऽमात्यकेभ्यश्च तथैवार्थाधिकारितः ॥ १५५ ॥

चौरैः साहसिकैश्चाटैर्दुराचारैस्तथा परैः ।
विशेषेण च कायस्थैः पीडिताः पालयेत् प्रजाः ॥ १५६ ॥

स्वराष्ट्रं यो नृपो मोहात् पीडयेदनवेक्षया ।
राज्यात् स च्यवते शीघ्रं प्राणेभ्यः सह बन्धुभिः ॥ १५७ ॥

यथैव प्राणिनां प्राणा हीयन्ते देहपीडनात् ।
तथैव भूभुजां प्राणा हीयन्ते देशपीडनात् ॥ १५८ ॥

एकग्राममभुं कुर्याद् दशग्रामप्रभुं तथा ।
ग्रामाणां विंशतेः कुर्यात् प्रभुं शत-सहस्रयोः ॥ १५९ ॥

ग्रामे दोषं समुत्पन्नमशक्तश्शासितुं यदि ।
दशग्रामेशिनं शंसेद् दशेशो विंशतीश्वरे ॥ १६० ॥

विंशतीशः शतेशाय तत् सर्वं विनिवेदयेत् ।
ब्रूयाद् ग्रामशतस्वामी सहस्रस्वामिनेऽखिलम् ॥ १६१ ॥

उत्पन्नांस्तु तथा दोषान् ग्रामादाधु निवेदितान् ।
ज्ञात्वा तत्र स्थिताः सर्वे कुर्युस्तेषां प्रतिक्रियाम् ॥ १६२ ॥

इति राष्ट्रपालनविवेकः ॥

पञ्चाशत्तम आदेयो भागः पशु–हिरण्ययोः ।
अष्टमो द्वादशो वाऽपि षष्ठो वा धान्यतो नृपैः ॥ १६३ ॥

फलक्षेत्रानुरूपेण गृह्णीयात् तत्करं नृपः ।
स्वीकुर्यादथ षड्भागं पण्ययोर्मधुसर्पिषोः ॥ १६४ ॥

रस-गन्धौषधीनां च मूल-पुष्प-फलस्य च ।
तृणानां शाकपत्राणां कर्मणां चर्मणामपि ॥ १६५ ॥

मृत्तिकाकृतभाण्डानां भाण्डस्याश्ममयस्य च ।
आपन्नियतोऽप्याददीत श्रोत्रियाच्च करं नृपः ॥ १६६ ॥

इति करादानविवेकः ॥

भूप्रदेशमकृष्टं तु गवां चाराय कल्पयेत् ।
देवोद्यानं सुप्रतिष्ठं मुनिभ्यो वितरेन्नृपः ॥ १६७ ॥

मृगसङ्घातसम्पन्नं क्रूरसत्त्वैर्विवर्जितम् ।
वनमात्मविहारार्थं पालयेत् पुरपार्श्वगम् ॥ १६८ ॥

प्रत्यन्तदेशसम्भूतं वनं गिरिदरीयुतम् ।
सर्वेषां गृहकृत्यार्थं पार्थिवः प्रतिपादयेत् ॥ १६९ ॥

फलैर्मूलैस्तृणैः काष्ठैः शाकैस्तत्रोत्थितैर्नराः ।
जीवन्ति ये ततो ग्राह्यो दशमोंऽशो महीभुजा ॥ १७० ॥

द्विपिमन्यवनं श्रेष्ठं वर्तमानगजं च यत् ।
अटवीवर्तिभिर्लोकै रक्षणीयं क्षमाभुजा ॥ १७१ ॥

इति देशजनरक्षा ॥

गङ्गासागरहेमाद्रिप्रयागाणां च मध्यतः ।
वनं प्राच्यमिति प्रोक्तं कोशिताब्धिवय पश्चिमे ॥ १७२ ॥

त्रिपुर्याः कोसलादौ च चेदिकारूषकं वनम् ।
श्रीक्षेत्रं गौडपञ्चालमाङ्गरेयं वनं स्मृतम् ॥ १७३ ॥

विन्ध्याद्रिचित्रकूटाद्रिकलिङ्गविषयाश्रितम् ।
वनं कालिङ्गकं नाम समुद्रावधि कीर्त्यते ॥ १७४ ॥

श्रीशैले चेदिशैले च मलयाद्रौ तथैव च ।
वनं दाशार्णकं नाम करिणां जन्मकारणम् ॥ १७५ ॥

सह्याद्रिभृगुकच्छान्तमपरान्तवनं स्मृतम् ।
द्वारवत्यामवन्त्यां च सौराष्ट्रवनमुच्यते ॥ १७६ ॥

कालञ्जरे कुरुक्षेत्रे सिन्धुसागरसङ्गमे ।
वनं पाञ्चनदं प्रोक्तं हिमालयकृतावधि ॥ १७७ ॥

कालिङ्गं चेदिकारूषं दाशार्णं च वनं वरम् ।
आङ्गरेयं तथा प्राच्यं मध्यमं वनमिष्यते ॥ १७८ ॥

अपरान्तं पाञ्चनदं सौराष्ट्रं चाधमं वनम् ।
एवमष्ट वनान्याहुर्गजानां जन्मनः पदम् ॥ १७९ ॥

इति गजवनविभागलक्षणम् ॥

घ्नन्ति ये करिणः पापा घातयेत् तान् महीपतिः ।
दैवान्मृतेषु नागेषु तेषां दन्तान् समाहरेत् ॥ १८० ॥

करिणो मूत्र-शकृतां लिप्साभिरटवीचरैः ।
अकण्टकदलच्छायैर्जानीयादिभयूथकम् ॥ १८१ ॥

पदमार्गैर्लेण्डैश्च तदाघातैर्हतद्रुमैः ।
बुध्येत शयनस्थानैर्गजांस्तद्बृंहितैरपि ॥ १८२ ॥

१ A चान्तो ।

पारिकर्मयुतः पादपाशजाङ्कसमन्वितः ।
करिणी-तुरगारूढैर्यन्त्रिभिर्बहुभिर्वृतः ॥ १८३ ॥

समादिष्टः क्षितीशेन करिकर्मविचक्षणः ।
द्विरदान् धारयेद् ग्रीष्मे यत्नतो लक्षणान्वितान् ॥ १८४ ॥

धारयेत् त्रिविधैर्बन्धैर्द्विपानामभिधादिभिः ।
पार्थिवेन विधातव्यः पुरुषैर्बन्धवेदिभिः ॥ १८५ ॥

खाताबन्धो वारिबन्धो बन्धश्चानुगतः परः ।
उत्तमस्त्रिप्रकारः स्याद् बन्धः करटिनामयम् ॥ १८६ ॥

आपातश्चावपातश्च द्वौ बन्धौ निन्दितौ मतौ ।
विनश्यन्ति गजा यस्मात् तस्मात् तौ परिवर्जयेत् ॥ १८७ ॥

वारस्थानं समालोक्य घासं हृद्यं ततः क्षिपेत् ।
सल्लकी-कदलीदण्डानिक्षुकाण्डान् मृणासमान् ॥ १८८ ॥

नलिनीकन्दकान् मृष्टान् नवान् पिप्पलपल्लवान् ।
वैणवं हरितं पत्रं तथैवान्यद् गजप्रियम् ॥ १८९ ॥

द्विपियूथं समागच्छेदार्द्रग्रासस्य लम्पटम् ।
प्रत्यहं दृश्यते तत्र तदा मार्गो निरुध्यते ॥ १९० ॥

क्रोशमात्रायतां भूमिं विस्तारेण च तत्समाम् ।
वृक्षैः परिघया वाऽपि समन्तात् परिवेष्टयेत् ॥ १९१ ॥

द्वारं तत्र प्रकुर्वीत निर्वर्तनपरीमितम् ।
कुञ्जराणां प्रवेशार्थं वारिबन्धविचक्षणः ॥ १९२ ॥

प्रविष्टान् द्विरदांस्तत्र सम्यगालोक्य बुद्धिमान् ।
वारिद्वारं निरुन्धीत महावृक्षैस्तिरस्कृतम् ॥ १९३ ॥

अन्तःस्थान् बन्धयेन्नागान् सर्वलक्षणसंयुतान् ।
ईदृग्विधस्तु यो बन्धो वारिबन्धः स कथ्यते ॥ १९४ ॥

इति वारिबन्धः ॥

सन्नाहो वा वशा वश्या महाकाया महाजवाः ।
आरूढाः पत्रसंछन्नाः पाशहस्ताश्च हस्तिपाः ॥ १९५ ॥

करिणीनां करे पाशान् हस्तिबन्धाय दापयेत् ।
वायोरधः शनैर्गच्छेद् गजानामन्तिकं बुधः ॥ १९६ ॥

घटयित्वा वशा नागैर्बध्नीयात् तत्र कुञ्जरान् ।
एष बन्धः समाख्यातो वशाबन्धो मनोहरः ॥ १९७ ॥

इति वशाबन्धः ॥

वीक्ष्य पापर्द्धिकैर्यत्राजिद्विनं गजयूथकम् ।
बहुभिः पाशहस्तैश्च कूर्चहस्तैः समावृतः ॥ १९८ ॥

शृङ्गहस्तैस्तथा कैश्चिदाराहस्तैश्च कैश्चन ।
पायकैर्विविधैः सार्धं गच्छेन्मातङ्गबन्धकः ॥ १९९ ॥

अश्वारूढैर्वेशारूढैर्गजारूढैर्विचक्षणैः ।
सन्नद्धो गजबन्धाय गच्छेद् राज्ञा नियोजितः ॥ २०० ॥

तोयस्थानेषु सर्वेषु समीपस्थेषु शाखिषु ।
आरोपयेद् बहून् भृत्यांस्तूर्यहस्तान् विचक्षणान् ॥ २०१ ॥

निद्रावशसमापन्नं यत्र यूथं व्यवस्थितम् ।
प्रातःकाले शनैर्गच्छेन्निदाघे समुपस्थिते ॥ २०२ ॥

सवामतैरघोषाभे निवार्य जननिस्वनम् ।
सहसा वादयेत् तूर्यं हांकारवसंयुतम् ॥ २०३ ॥

उत्थाय चकितं वेगाज्जागरूकं विनिद्रितम् ।
सम्भ्रान्तमानसं भीतं पलायनपरं भवेत् ॥ २०४ ॥

ततस्तदनुगच्छेयुर्वारिबन्धविशारदाः ।
येन मार्गेण सन्त्रस्तं गतं यूथं वनान्तरम् ॥ २०५ ॥

कूपे विहाय यो गच्छेत् गजकन्यस्तमार्गकः ।
तं नागबन्धुगच्छेयुः पादकूपैकपातिनः ॥ २०६ ॥

पिपासितः परिश्रान्तस्तोयमन्विष्य पूगतः ।
भुक्त्वा कूर्मकृतं मार्गं कन्यकाः गच्छति ॥ २०७ ॥

शुण्डकायकपाशेऽन्यत्र गते च जवतां गते ।
स्कन्धे करे च पुच्छे च निबध्नन्ति वर्धपल्लवे ॥ २०८ ॥

ततो वेगयुता वध्या पश्चाद्भागोऽरणेरिताः ।
भ्रान्तं द्विपं समागत्य वेष्टयन्ति समन्ततः ॥ २०९ ॥

ततः पाशधरा दक्षा वशागात्रतिरोहिताः ।
निबध्नन्ति नराः शूरास्तं मात्रापरयोर्द्विपम् ॥ २१० ॥

कक्षापार्श्वे च कण्ठे च निगडैर्दृढनिर्मितैः ।
समीपस्थस्य वृक्षस्य स्कन्धे बध्नन्ति सिन्धुरम् ॥ २११ ॥

अनेन विधिना यत्र क्रियते गजबन्धनम् ।
स बन्धोऽनुगतो ज्ञेयो बन्धविद्यासु कोविदैः ॥ २१२ ॥

इत्यनुगतबन्धः ॥

नालिकेराननोद्भूतवल्ककल्पितपाशकम् ।
षष्टिहस्तायु(य)तं स्थौल्ये प्रकोष्ठसमतां गतम् ॥ २१३ ॥

तस्यार्धं निक्षिपेद् गात्रे पूरयेच्च दृढं मृदा ।
शेषार्धं पाशवत् कुर्याद् गजग्रीवाधिरोपणम् ॥ २१४ ॥

तेन पाशेन यो बद्धः स मूर्च्छापीडितो भवेत् ।
प्रमादोऽपि भवेत् क्वापि क्वापि जीवति कुञ्जरः ॥ २१५ ॥

आपाताख्यः समाख्यातो बन्धोऽयं हस्तिबन्धकैः ।
निन्दितश्च भवत्यत्र सिंहसंज्ञयितः सदा ॥ २१६ ॥

इत्यापाताबन्धः ॥

चतुर्हस्तमितं खातं विस्तरेण करद्वयम् ।
पञ्चबाहुप्रमाणेन दीर्घं कुर्वीत बुद्धिमान् ॥ २१७ ॥

गोपनीयं प्रयत्नेन यष्टिभिस्तृणपल्लवैः ।
यस्तत्र निपतेन्नागो विघ्नो यस्यापि सम्भवेत् ॥ २१८ ॥

खञ्जो वा जायते पार्श्वेनांशो वाऽस्य प्रभज्यते ।
दन्तैर्वियुज्यते वापि कोऽपि जीवति वा न वा ॥ २१९ ॥

बन्धोऽयमवपाताख्यस्तेनात्यर्थं विगर्हितः ।
यस्मान्नागाः प्रणश्यन्ति तेनैनं वर्जयेद् बुधः ॥ २२० ॥

॥ इत्यवपातबन्धः ॥

प्रबध्य कुञ्जरान् राजा तेषां लक्षणमुत्तमम् ।
अनूकमंशकं सत्त्वं कुलं सम्यग् विचारयेत् ॥ २२१ ॥

सप्तारत्निसमुत्सेधो नवारत्न्यायतश्च यः ।
दशारत्निपरीणाहः स गजो मानतः शुभः ॥ २२२ ॥

अरत्निमात्रेणाधिक्यादरालः परिकीर्तितः ।
अन्यरालो द्व्याधिक्याभिन्द्यौ मानाधिकाविमौ ॥ २२३ ॥

अरत्निमाने हीनो यः स मध्यो मानतो गजः ।
अरत्निद्वयहीनस्तु कनिष्ठः परिकीर्तितः ॥ २२४ ॥

कनिष्ठादपि यो हीनो वामनः स निगद्यते ।
वामनादपि यो हीनः कुब्जो निन्द्यौ गजाविमौ ॥ २२५ ॥

सुस्निग्धौ रदनौ वृत्तौ दक्षिणश्च समुन्नतः ।
अकृष्टं तालु ताम्रं च दशाष्टौ नखराः शुभाः ॥ २२६ ॥

अपाण्डु मेहनं शस्तं वालयुक्तश्च वालधिः ।
अच्छिद्रौ विस्तृतौ कर्णौ मधुपिङ्गविलोचने ॥ २२७ ॥

बृंहितं मेघगम्भीरं लोहितं पुष्करं वरम् ।
अङ्गुली वर्तुला दीर्घा गौरश्यामा तनोः छविः ॥२२८॥

शुभं लक्षणमेतत् स्याद् गजानां जयकारिणाम् ।
तस्माल्लक्षणसंयुक्ता गजा ग्राह्या महाशुभा ॥ २२९

इति गजशुभलक्षणम् ॥

अतो यदन्यत तत् सर्वं विरूपं विकृतं च यत् ।
न्यूनाधिकं तु यद्रूपं तत्सर्वमशुभं विदुः ॥ २३० ॥

हीनलक्षणसंयुक्ता गजास्त्याज्या महाशुभा ।
दुर्भिक्षशोकभयदा लोचनोद्वेगकारिणः ॥ २३१ ॥

गति-चेष्टा-स्वरान् यस्य सत्त्वस्यानुकरोति यत् ।
अनूकमिति तद् ज्ञेयं गजचेष्टितकोविदैः ॥ २३२ ॥

शुभानां प्राणिनां चेष्टां शुभानूकं वरं हि तत् ।
निन्दितानां तथा चेष्टामनूकं निन्दितं विदुः ॥ २३३ ॥

सुव्यक्ता बिन्दवो यस्य गौरो वर्णो मनोहरः ।
लोहितौ नेत्रयोः प्रान्तौ स्निग्धौ च वलितौ रदौ ॥ २३४ ॥

एवं लक्षणसम्पूर्णो गजो भद्रांशको मतः ।
पूजार्होऽसौ नरेन्द्राणां विजयारोग्यवर्धनः ॥ २३५ ॥

कक्षाभागे तथा कण्ठे यः समः पृथुलासनः ।
मुखे कोकनदच्छायो गुप्तरोमविराजितः ॥ २३६ ॥

बहुकालमदः शूरो मेघनादेन हृष्यति ।
प्रजापत्यंशको नागः प्रजावृद्धिकरो ह्यसौ ॥ २३७ ॥

बिन्दवो वलिरेखा वा दृश्यन्ते यस्य वर्ष्मणि ।
स्वस्तिकैर्वर्धमानाद्यैर्नन्द्यावर्तैश्च लक्षिताः ॥ २३८ ॥

रक्तोत्पलसमे नेत्रे स स्यादिन्द्रांशको गजः ।
समरे विजयं दद्यात् परभूपालसम्पदः ॥ २३९ ॥

ताम्रावोष्ठौ तथा जिह्वा धात्रीफलसमद्युतिः ।
नयने रदनौ यस्य कुमुमोदकसन्निभम् (भौ) ॥ २४० ॥

धनदांशसमुद्भूतो धनरत्नसमृद्धिकृत् ।
नृपाणां भवने तिष्ठन् पूजितः कुञ्जरोत्तमः ॥ २४१ ॥

कृष्णमेघनिभो वर्णे स्यानमर्पिः सदग्रहः ।
आसने सुभगो मूर्ध्नि गम्भीरघनगर्जितः ॥ २४२ ॥

स्रवति प्रचुरं दानं वरुणांशकसम्भवः ।
आहवे रिपुसंहारी निजभर्तुर्जयप्रदः ॥ २४३ ॥

त्रिवलीमण्डितः कण्ठे क्षौद्रपिङ्गविलोचनः ।
केतकच्छायदशनः पृथुरक्ताग्रपल्लवः ॥ २४४ ॥

बिन्दुमान् पाण्डुवर्णश्च शशाङ्कांशकसम्भवः ।
सङ्ग्रामाङ्गणे राज्ञां गजोऽयं विजयप्रदः ॥ २४५ ॥

अग्निज्वालाप्रदीप्तो केशवालेषु पिङ्गलः ।
पिङ्गाक्षः पिङ्गतालुश्च पिङ्गपुष्करशोभितः ॥ २४६ ॥

अग्न्यंशकसमुद्भूतः साक्षाद् वह्निरिवाहवे ।
भस्मसात् कुरुते सैन्यमशेषं द्विषतां सदा ॥ २४७ ॥

कृष्णा यस्य तनोश्छाया गौरी चाक्ष्णोश्च कर्णयोः ।
नखा दीपशिखाभासा निबिडा मांसला तनुः ॥ २४८ ॥

अग्नि-मारुतयोरंशसंजातः कोपनो जवी ।
तस्य दोषोऽप्यमेकः स्यादङ्कुशं यन्न मन्यते ॥ २४९ ॥

दोषाभासो गुणस्तस्य सञ्जाते समरोत्सवे ।
प्रचण्डत्वाद् भयं धत्ते रिपुसैन्येष्वयं गजः ॥ २५० ॥

दन्तमध्यात् समारभ्य क्रमशो हीयते करः ।
ताम्रपुष्करपर्यन्तं सुप्रमाणायताङ्गुलीः ॥ २५१ ॥

सुगन्धिः शीकरासारो दीर्घो निश्वाससन्ततिः ।
घनबृंहितध्वानो बलीहीनं वपुर्दृढम् ॥ २५२ ॥

मृदु सूक्ष्माञ्जनश्यामं सर्वाङ्गीणं तनूरुहम् ।
श्रीगर्भपुष्करच्छाया कान्तिः सर्वाङ्गसङ्गिनी ॥ २५३ ॥

सुवर्णकेतकाभासौ रदनौ वर्तुलौ दृढौ ।
आयतः मांसलो मध्ये निम्नः स्याद् वातकुम्भकः ॥ २५४ ॥

अपेतरोमवानाख्यः समदे च समे शुभे ।
मुखमण्डलमत्यर्थं रम्यं दृष्टिमनोरमम् ॥ २५५ ॥

पुष्पसारसमे नेत्रे पक्ष्मले प्रान्तलोहिते ।
वलिनौ मृदुविस्तीर्णौ समौ छेदविवर्जितौ ॥ २५६ ॥

शिराविरहितौ कर्णतालौ दुन्दुभिनिस्वनौ ।
वर्तुलावुन्नतौ कुम्भौ समौ लक्ष्याङ्कुशोपमौ ॥ २५७ ॥

रम्यौ भालतलन्यासौ विपुलं चासनं समम् ।
ऋजुर्ह्रस्वो गलावेष्टो दीर्घावंसौ च मांसलौ ॥ २५८ ॥

बाहू दीर्घावृजू पीनावधोऽधः क्रमशः कृशौ ।
कूर्माकारतलाकाराः स्निग्धार्धेन्दुनिभा नखाः ॥ २५९ ॥

विंशतिर्वा दशाष्टौ वा शोभनाः परिकीर्तिताः ।
उरो विशालमुद्बद्धमुदरं सन्नतौ कुक्षौ ॥ २६० ॥

अलसं मेहनं शस्तं वराहजघनं परम् ।
सज्यचापनिभो वंशो वालधिश्चायतः कृशः ॥ २६१ ॥

शङ्खचक्रगदाकारा बिन्दवो बलयोऽथवा ।
[illegible]

अभिषेकार्चितः पूज्यः सर्वकार्यप्रसाधकः।
पुनाति रत्नदो राष्ट्रं धनधान्यसमृद्धिकृत् ॥ २६३ ॥

शुच्याहाररतो नित्यं बलिरेखाविवर्जितः।
अनामयः स्थिरः शूरो देवसत्त्वो भवेद् गजः ॥ २६४ ॥

मेधावी वै क्रियादक्षः कामुकश्चपलः पटुः।
स्नानप्रेक्षणके शस्तो गजो गन्धर्वसत्त्वजः ॥ २६५ ॥

मत्स्यावगाहनासक्तः कोपनः कातरो भृशम्।
भोजने लम्पटो नित्यं कुञ्जरो विप्रसत्त्वजः ॥ २६६ ॥

दान्तः शूरः सदोत्साहो बली युद्धविशारदः।
अभीरुराहवे धीरः क्षत्रसत्त्वो भवेद् द्विपः ॥ २६७ ॥

दण्डसाध्यस्तथा नीचो मूर्खश्च मलिनाशनः।
आहवे निरतः शूरः शूद्रसत्त्वो भवेत् करी ॥ २६८ ॥

विश्वासघातकः क्रूरो गमने कुटिलक्रमः।
न भुङ्क्ते च मदेऽत्यर्थं सर्पसत्त्वः करी मतः ॥ २६९ ॥

एतानि त्रीणि सत्त्वानि राजसस्य भवन्ति हि।
राजसः पित्तभूयिष्ठः पिङ्गलस्तनुविग्रहः ॥ २७० ॥

उन्मार्गेण सदा याति विवेकरहितो भृशम्।
उन्मत्त इव चेष्टायां द्विपः पैशाचसत्त्वजः ॥ २७१ ॥

निशायां चरति स्वैरं मनुष्याणां वधे रतः।
वेगवान् सबलो हस्ती रक्षःसत्त्वसमुद्भवः ॥ २७२ ॥

एते द्वे तामसे सत्त्वे तामसो वातको भृशम्।
सवातो दृश्यते रूक्षो निद्रालुश्चपलो गजः ॥ २७३ ॥

आवर्ते पाण्डुरो यस्तु केशे रोमणि वालधौ।
वर्णे च नेत्रयोश्चैव स स्यादैरावतान्वयः ॥ २७४ ॥

युद्धक्षमः साग्रमदः कोपी युद्धविशारदः ।
कुञ्जरामा स्थूलशीर्षः पुण्डरीकान्वयो गजः ॥ २७५ ॥

श्यामवर्णः सुदेहश्च कृष्णकेशः कृशोदरः ।
स्थूलबिन्दुर्द्दनुर्वंशः पुष्पदन्तान्वयः करी ॥ २७६ ॥

अग्निवर्णः सुवर्णाक्षो वेगवान् जङ्गलम्पटः ।
आयतो विस्तृतोऽत्यर्थं वामनान्वयजो द्विपः ॥ २७७ ॥

प्रचण्डः कुमुदच्छायः कृपाननयनः क्षमी ।
मेधावी तनुरोमा च सुप्रतीकान्वयो गजः ॥ २७८ ॥

स्निग्धताम्रसितदन्तो यष्टिनाहकरान्वितः ।
उन्नतस्थूलजघनः सोऽञ्जनान्वयसम्भवः ॥ २७९ ॥

रौद्रः पृथुशिरा ह्रस्वश्रोत्रहस्तसमन्वितः ।
पेचकाल्पः स्थूलकक्षः सार्वभौमान्वयो गजः ॥ २८० ॥

कुमुदाभः स्थूलतनुः स्निग्धरक्तोऽहितलोचनः ।
कृष्णविस्तीर्णहस्ताग्रः कुञ्जरः कुमुदान्वयः ॥ २८१ ॥

इति गजजातिभेदलक्षणम् ॥

एवं परीक्ष्य यत्नेन लक्षणैरुत्तमान् गजान् ।
स्वीकुर्यादवनीपालो विपरीतान् परित्यजेत् ॥ २८२ ॥

स्वीकृताननुबद्धांस्तान् सिन्धुरान् शिक्षयेन्नृपः ।
अवधेऽथ वधे कर्म वाक्पदाङ्कुशपार्ष्णिभिः ॥ २८३ ॥

शुभे दिने शुभे क्षेत्रे सौम्याशाभिमुखं गजम् ।
प्रातः कृत्वा द्विजश्रेष्ठान् मन्त्रसाध्या निबाचरे(ये)त् ॥ २८४ ॥

---

१ A [illegible] ।

दधि-दूर्वाक्षतैः पुष्पैश्चन्दनैः कुङ्कुमादिभिः ।
अर्चयेत् सिन्धुरं राजा सम्यग् दिनचतुष्टयम् ॥ २८५ ॥

ततश्चासौ स्मरञ्जन्म सामजन्मा मतङ्गजः ।
अभिनन्दन् गृहावासं त्यजन् कान्तारजं सुखम् ॥ २८६ ॥

उत्तमेऽहनि नागानामपराणि प्रबन्धयेत् ।
निगडैश्चर्मनिर्माणैर्दृढं गाढं यथासुखम् ॥ २८७ ॥

पुरोभागे त्रयं स्थाप्यं कर्णदेशे नरावुभौ ।
पश्चाद्भागे तथा द्वौ च सप्तागधारिणः क्रमात् ॥ २८८ ॥

पक्षयोरुभयोः स्थाप्ये करिण्यावतिशिक्षिते ।
आरोहस्तैस्ततः मन्त्रैर्नियम्योऽसौ मतङ्गजः ॥ २८९ ॥

शिक्षयेच्च ततो भाषां कर्मज्ञानाय दन्तिनम् ।
अनालस्येन निर्बन्धात् प्रत्यहं गजपोषकः ॥ २९० ॥

पश्चेहोति च सञ्चाले स्थितानप्यपसारणे ।
हेड हेडेति वक्तव्यं गजशिक्षाविशारदैः ॥ २९१ ॥

पार्श्वद्वयापसारे च फार्पेति विनियोजयेत् ।
उपवेशे प्रयोक्तव्यं बिर्श्वाति वचनं स्फुटम् ॥ २९२ ॥

तुहुरुत्थापने वाच्यं गजशिक्षाविशारदैः ।
द्विवाच्यं करसङ्कोचे तप(ष) डिहरेति शिक्षकैः ॥ २९३ ॥

भर्राहेति प्रयोज्यं हि करस्योत्क्षेपणं प्रति ।
स्तम्भादिलगने वाच्यं हिज्ञ-हिज्ञेति शिक्षकैः ॥ २९४ ॥

गात्रस्योत्क्षेपणे वाच्यं भले भलेति यन्त्रिभिः ।
अपरानयने किः किर्भणनीयं विचक्षणैः ॥ २९५ ॥

धावनार्थं महामात्रो दे दे शब्दमुदीरयेत् ।
करप्रहारणे शिक्ष्यो हेहेयेति द्विरुक्तितः ॥ २९६ ॥

कवलग्रसने द्विर्द्विर्यावद् ग्रासो निगीर्यते ।
परित्यागे प्रयोक्तव्या चुरु चुरेति भारती ॥ २९७ ॥

मा मा निवारणे वाच्यो गजशिक्षाविशारदैः ।
हिग हिगेति वक्तव्या भूयो दन्ताभिघातने ॥ २९८ ॥

बहिः शुण्डाभिघाते तु हु हु वाक्यं प्रयोजयेत् ।
शनैः सञ्चारणे वाच्यो लेच लेचेति कोविदैः ॥ २९९ ॥

आह्वाने कुञ्जरो वाच्य इध भूयेति यन्त्रिभिः ।
कस्यापि ग्रहणे वाच्यो गे गे शब्दः प्रयत्नतः ॥ ३०० ॥

ईदृशी प्रथमा भाषा शिक्षयेत मतङ्गजम् ।
भाषाभिज्ञं गजं ज्ञात्वा पश्चात्कर्मणि याजयेत् ॥ ३०१ ॥

पुरःस्थितेन शुण्डायां नागदो(आगतो)ऽसौ शनैः शनैः ।
कर्तव्यस्तद्भयान्नागः करं सङ्कोच्य तिष्ठति ॥ ३०२ ॥

आराभ्यां मुखपार्श्वस्थौ तुदतो हनुयुग्मकम् ।
उन्नमय्य मुखं नागस्तद्भयादवतिष्ठते ॥ ३०३ ॥

ततः कर्णसमीपस्थः कर्णमूले प्रतोदनम् ।
कुरुतस्तद्भयाद् दन्ती कर्णावुद्धृत्य तिष्ठति ॥ ३०४ ॥

आराघातभयत्रस्तो यदि पश्चाद् व्रजेद् गजः ।
आराभ्यां ताडनं तस्य कुर्वाते पार्श्वसंस्थितौ ॥ ३०५ ॥

ततः स्थानकसंसिद्धः सौष्ठवं लभते गजः ।
शिक्षयेत ततो नागं यन्त्रितं सर्वकर्मसु ॥ ३०६ ॥

ततः कर्मकरो दक्षः पाणिभ्यां धृतमस्तकः ।
स्थानके तिष्ठतस्तस्य प्रविश्य करिणोऽग्रतः ॥ ३०७ ॥

---

१ A गिह गिहेति.

आस्फाल्य भस्त्रिके पूर्वं दर्शयेदेकभस्त्रिकाम् ।
हुङ्कारैर्द्विपं यन्ता भस्त्रिकाहनने नुदेत् ॥ १०८ ॥

करं कुण्डलिनं नागः प्रसार्य धृतभस्त्रिकाम् ।
प्रहरेद् बाह्यहस्तेन प्रेरितः सभिषादिना ॥ १०९ ॥

हस्तमुत्क्षिप्य नागेन्द्रं यन्ता वाक्यैः सुशिक्षितैः ।
अन्तःकरेण भस्त्रायां ताडनं कारयेद् दृढम् ॥ ११० ॥

पार्श्वद्वयसमायुक्तौ ततः कर्मकरावुभौ ।
भस्त्रिकापाणिकौ नागमात्मानं प्रति कर्षतः ॥ १११ ॥

बाह्यहस्तेन तत्रैकां भस्त्रिकां ताडयेद् गजः ।
अन्तर्हस्तेन चाप्यन्यां प्रहरेत पुनः पुनः ॥ ११२ ॥

क्रमेणानेन तिष्ठन्ति भस्त्रिकापाणयस्त्रयः ।
चत्वारः पञ्च वा दश दर्शयन्तः स्वभस्त्रिकाः ॥ ११३ ॥

अन्तर्हस्तेन तत्रैकां बाह्यहस्तेन चापराम् ।
प्रहारयेत् तमारूढो भस्त्रिकास्ता यथाक्रमम् ॥ ११४ ॥

ततः प्रहरणे दक्षो भवेन्मातङ्गकुञ्जरः ।
पश्चात् प्रहरतेऽङ्गानि नरोष्ट्र-गज-वाजिनाम् ॥ ११५ ॥

ततोऽङ्घधारणैः शिक्ष्यस्तज्ज्ञैः कर्मकरैः करी ।
घासं चेष्टं गुडं शालिमिक्षुकाण्डमथापि वा ॥ ११६ ॥

दर्शयित्वा प्रकोष्ठेनैनं प्रसारितकरं गजम् ।
विवेष्टयेच्चिरं गाढं घासकोशं प्रदर्शयेत् ॥ ११७ ॥

करेण वेष्टितो गाढं दद्याद् ग्रासं करस्थितम् ।
आस्फाल्य च करं तस्य स्वयमुत्कृत्य गच्छति ॥ ११८ ॥

चारणे विनतायाङ्गं चारयेल्लोचनैर्विना ।
स्वाङ्गं च विधुतं यस्माद् वञ्चयेत् परिवर्तनैः ॥ ११९ ॥

ततोऽङ्कुशेन संरुद्धः प्रतोदेन च पीडितः ।
हिग् हिगेति संप्रोक्तो धृत्वा कर्मकरं दृढम् ॥ १२० ॥

मुखं निक्षिप्य भूभागे मोहाद्वाकुञ्च्य तिष्ठति ।
हस्तेन वेष्टयेदङ्गं कर्मकारस्य कुञ्जरः ॥ १२१ ॥

पश्चाद् चर्मविनिर्माणं प्रतिरूपं निराकृतिः ।
निक्षिपेदग्रहस्तस्य कुञ्जरस्य वधैषिणः ॥ १२२ ॥

ततः शुण्डाभिघातेन दन्ताग्रव्यथनेन च ।
गात्राभ्यामपराभ्यां च मर्दनेन च पेषणैः ॥ १२३ ॥

चूर्णीकरोति तद्रूपं वधकर्मणि शिक्षितः ।
ततोऽसौ मारयेज्जन्तून् कृतान्त इव शिक्षितः ॥ १२४ ॥

चतुरस्रं कर्पकसं वालुकापूरितं मनाक् ।
दण्डाग्रसंस्थितं कार्यं मल्लासेन्यभिधीयते ॥ १२५ ॥

दण्डाग्रे दर्शयेल्लक्षं कम्पयेच्च सशब्दकम् ।
निषादिप्रेरितो नागो रदनाभ्यां निहन्ति तम् ॥ १२६ ॥

समुन्नतैस्तथा नीचैर्घनैः पार्श्वसमाश्रितैः ।
विविधैः प्रहरेल्लक्षं दन्तघातेषु शिक्षितः ॥ १२७ ॥

उन्मोच्य बन्धनं पश्चात् पूर्वस्थानकमाश्रितम् ।
सञ्चारयेत् ततो वीथ्यामङ्गुष्ठाभ्यां नुदन् गजम् ॥ १२८ ॥

कवलं दर्शयित्वा तु धावयेदनु धावतः ।
पार्श्वाभ्यां वर्तनैः पश्चान्मण्डलेषु प्रचारयेत् ॥ १२९ ॥

एवं संशिक्षितो नागो वध्यावध्येषु कर्मसु ।
मथ्नात्येकोऽपि सङ्ग्रामे नर-वाजि-गजान् बहून् ॥ १३० ॥

शुभलक्षणसंयुक्ताः कुञ्जरा भद्रजातयः ।
शिक्षिताः सर्वकर्माणि ग्रहे कार्या महीभुजा ॥ १३१ ॥

इति गजशिक्षानिरूपणम् ॥

रजतस्य सुवर्णस्य रत्नानां रक्षयेत् खनिम् ।
तत्सम्भूतेषु सर्वेषु करं राजा समाहरेत् ॥ १३२ ॥

द्रव्यं भूमिगतं विद्याद् विविधैर्लक्षणैर्नृपः ।
लक्षणानि प्रवक्ष्यामि निधीनां प्रतिपत्तये ॥ १३३ ॥

वर्षासु शीतकाले च यत्र गोधा निरन्तरम् ।
वृश्चिकः पन्नगो वाऽऽस्ते तत्र भूमौ भवेन्निधिः ॥ १३४ ॥

दृश्यते खञ्जरीटानां सम्भोगो यत्र भूतले ।
निरिन्धनो ज्वलेद् वह्निर्ध्रुवं तत्र भवेन्निधिः ॥ १३५ ॥

आवर्तो दृश्यते यत्र विना हेतुं जलाशये ।
पङ्कजानि द्विशीर्षाणि तत्र तोये भवेन्निधिः ॥ १३६ ॥

अप्ररोहस्य वृक्षस्य प्ररोहो यत्र दृश्यते ।
रम्भा कण्टकिनी यत्र भूमौ तत्र भवेन्निधिः ॥ १३७ ॥

शिखाद्वितयसंयुक्तस्तालो यत्र प्रदृश्यते ।
पुष्पस्योपरि पुष्पं वा क्षितौ तत्र भवेन्निधिः ॥ १३८ ॥

दृष्ट्वाऽर्कं भुवमाघ्राय वृषभो यत्र नर्दति ।
वारं वारं प्रहृष्टात्मा क्षोण्यां तत्र भवेन्निधिः ॥ १३९ ॥

हस्तद्वयसमुत्सेधो बाष्पो यत्रानिमित्तकः ।
रूढिर्वा लौकिकी यत्र निधिं तत्र खनेन्नृपः ॥ १४० ॥

खनिशास्त्रेषु सर्वेषु लक्षणेन निरूप्यते ।
तत्रापि लक्ष्यते तज्ज्ञैर्निधिर्विध्युक्तमार्गतः ॥ १४१ ॥

लक्षणैर्व्यञ्जिते द्रव्ये स्थाननिश्चयहेतवे ।
अस्ति नास्तीति शङ्काया निवृत्त्यै वर्तिरुच्यते ॥ १४२ ॥

उलूकस्य वसाङ्कोलतैलं कमलतन्तवः ।
एतैर्विहितया वर्त्या कज्जलं परिकल्पयेत् ॥ १४३ ॥

कज्जलेनाञ्जयेत् तेन लोचने प्रयतो नरः ।
करस्थमिव भूमिस्थं निधिं पश्यति निश्चितम् ॥ १४४ ॥

सितार्कतूलकस्यापि पद्मसूत्रविवेष्टितम् ।
सप्तकृत्वो वराहस्य वसया परिभावितम् ॥ १४५ ॥

कपिलासर्पि(?)दीप्तं च कज्जलं जनयेद् यदा ।
तत्कज्जलाक्तनयनो निधिं पश्येद् भुवि स्थितम् ॥ १४६ ॥

हृदयं कृष्णकाकस्य जिह्वां चादाय पेषयेत् ।
अञ्जयेन्मधुना सार्द्धं नेत्रे पश्येत् ततो निधिम् ॥ १४७ ॥

रात्रौ कृष्णचतुर्दश्यामुलूकवसयोक्षिताम् ।
पद्मसूत्रकृतां वर्तिं कज्जलार्थं प्रदीपयेत् ॥ १४८ ॥

तेनाञ्जिताक्षियुगलो गृध्रदृष्ट्याऽवलोकयेत् ।
शर्वर्यां वीक्षते वाढं निधिं भूमितलस्थितम् ॥ १४९ ॥

कुनटी गन्धकं तालं शशकस्य च लेण्डिका ।
पद्मसूत्रार्कतूलेन वर्तिमेभिः प्रकल्पयेत् ॥ १५० ॥

कपिलासर्पिषा दीप्ता वर्तिर्निधिसमीपगा ।
उत्पतेत् स्फुरत्स्फुटे द्रव्ये निपतेत् सा महानिधौ ॥ १५१ ॥

अर्क-शाल्मलि-कार्पास-तूलकल्पिततन्तुभिः ।
पट्ट-पद्मजसूत्रैश्च वेष्टयेच्छिखिनः शिखाम् ॥ १५२ ॥

महानिलप्रदीप्ता सा निधिस्थाने प्रदर्शिता ।
त्रिशिखा जायते सद्यो निपतेद् वा निधिस्थले ॥ १५३ ॥

एवं ज्ञात्वा निधिस्थानं पुष्प-धूपाक्षतैः फलैः ।
यथायोग्यं च बलिभिः पूजयेत् त्रिदिवौकसः ॥ १५४ ॥

---

१ B °तुले च । २ B °मेकां । ३ B प्रस्फुटे । ४ B पद्म° । ५ B °तैल ।

श्रीधरं च श्रिया युक्तमुमया च महेश्वरम् ।
ब्रह्माणं च सरस्वत्या सहितं पूजयेद् बुधः ॥ १५५ ॥

गणेशं च गणैः सार्द्धं तत्स्थानाधिपतिं तथा ।
भूतवेतालसहितं क्षेत्रपालं च पूजयेत् ॥ १५६ ॥

धनेशं यक्षसङ्ख्यातपरिवारसमन्वितम् ।
जलस्थाने विशेषेण वरुणं च प्रपूजयेत् ॥ १५७ ॥

त्रिभिर्वा पञ्चभिर्वापि सप्तभिर्नवभिस्तथा ।
अधिकैर्विषमैर्वाऽपि साधकैः खननोद्यतैः ॥ १५८ ॥

उपोषितैः शुचिर्भूतैः शक्तैर्भयविवर्जितैः ।
खन्यशास्त्रानुसारेण निजाङ्गक्षतरक्षणैः ॥ १५९ ॥

समुद्धरेन्निधिं राजा निजाध्यक्षपुरःसरम् ।
एवं सिध्यन्ति सर्वाणि निधानानि न संशयः ॥ १६० ॥

धनानामीश्वरो राजा ब्रह्मणा परिकल्पितः ।
भूगतानां विशेषेण यतोऽसौ विबुधाधिपः ॥ १६१ ॥

इति निधिः ॥

मौक्तिकानां समुत्पत्तिः स्थाने स्थाने महोदधौ ।
तानि स्थानानि संरक्षेदाहरेच्च ततो धनम् ॥ १६२ ॥

विविधरत्नगर्भस्य नानासत्त्वोपसद्मनः ।
शरदभ्रप्रतीकाशतरङ्गोल्लासभासिनः ॥ १६३ ॥

अमरीकृतगीर्वाणनिवहस्य सुधारसैः ।
वडवाग्निशिखाजालैर्निह्नुताहिकनाम्भसः ॥ १६४ ॥

---

१ B खनि° ।

इन्द्रनीलनिभोत्तुङ्गतरङ्गाङ्कितं वपुः ।
बिभ्राणस्येन्दिराभर्तुर्विश्रम्भस्वापसद्मनः ॥ १६५ ॥

वज्रपातभयत्रस्तकुलाचलकुक्षिस्थितैः ।
रत्नौघदीप्तिसम्मिश्रफेनस्यातिवितन्वतः ॥ १६६ ॥

सुधामृतिकलादानात् कृतार्थीकृतशूलिनः ।
पातालमूलपर्यन्तसम्प्राप्तजलधारिणः ॥ १६७ ॥

अत्यग्रविद्रुमलतासन्दिग्धौर्वानलत्विषः ।
शङ्खैश्च वडवावह्निमूर्तिभ्रान्तिं वितन्वतः ॥ १६८ ॥

उल्लसद्भिर्जलेभानां वृन्दैः फेनलवोज्ज्वलैः ।
आकुलस्य गिरेः मूर्ध्नि मैनाकस्येव राजतैः ॥ १६९ ॥

अनन्तत्वान्महत्त्वाच्च बिभ्रतो गगनोपमाम् ।
उद्दामस्फुरितोत्तुङ्गतरङ्गत्रासकारिणः ॥ १७० ॥

पक्षच्छेदभयायातभूभृद्रक्षाविधायिनः ।
उपमां बिभ्रतः साक्षात् सोमेश्वरमहीभुजः ॥ १७१ ॥

ऐरावत–सुधा–लक्ष्मी–श्रीमद्वाजि–निजन्मनः ।
शयनस्य हरेस्तुङ्गभङ्गपात्रविपश्चितः ॥ १७२ ॥

पारिजातं सुधां लक्ष्मीं वारुणीं श्रीमद्वाजिनम् ।
दत्त्वा त्रिजगतो भावान् सम्प्राप्तस्य वदान्यताम् ॥ १७३ ॥

वेलापुरेषु सर्वेषु समीपस्थेषु वारिधेः ।
रक्षा विधेया यत्नेन राज्ञा सम्पदमिच्छता ॥ १७४ ॥

निजवेलातटस्थानां पोतवाहनकर्मणाम् ।
पोते भग्नागते तस्मात् दशमांशं हरेन्नृपः ॥ १७५ ॥

प्रतीपमारुतानीतपोतानां स्वेच्छया नृपः ।
स्वीकुर्यात् सकलं द्रव्यं किञ्चिद् दद्याच्च भूपतिः ॥ १७६ ॥

इति राष्ट्राध्यायः ॥ १ ॥

धातुवादप्रयोगैश्च विविधैर्वर्धयेद् धनम् ।
ताम्रेण साधयेत् स्वर्णं रौप्यं वङ्गेन साधयेत् ॥ १७७ ॥

शुष्कपुष्पपलाशस्य पुष्पं संशोष्य चूर्णयेत् ।
छागदुग्धेन तच्चूर्णं त्रीन् वारान् परिभावयेत् ॥ १७८ ॥

वङ्गपत्त्रांशचूर्णेन पिष्टेनैतत् प्रलेपयेत् ।
पुटपाकेन तद् दग्धं तारं भवति शोभनम् ॥ १७९ ॥

श्वेतब्रह्मतरोः पुष्पं स्वरसेन विभावयेत् ।
तालं द्वात्रिंशतं वारान् तेन वङ्गं प्रलेपयेत् ॥ १८० ॥

पुटपाकेन तद् दग्धं वङ्गं व्रजति तारताम् ।
मार्दवं कालिमां गन्धं वङ्गं त्यजति निश्चितम् ॥ १८१ ॥

श्वेतब्रह्मतरोर्बीजतैलेन परिभावयेत् ।
गन्धकं सप्तकृत्वोऽथ तेन ताम्रदलानि च ॥ १८२ ॥

लेपितं तत्पुटे दग्धं शुल्बं काञ्चनतां व्रजेत् ।
दाहच्छेदनिघर्षादिकर्मयोग्यं भवेत् ततः ॥ १८३ ॥

तस्य तैलेन दरदं गन्धकं पारदं तथा ।
मर्दयेत् स्वल्पपाषाणे यावत् तत् कल्कतां व्रजेत् ॥ १८४ ॥

लेपयेत् तेन कल्केन वङ्गपत्त्राणि सर्वतः ।
दग्ध्वा दग्ध्वा पुनर्लिम्पेद् वारान् द्वात्रिंशतं बुधः ॥ १८५ ॥

ततो वङ्गं भवेत् स्वर्णं रञ्जितं दरदादिभिः ।
व्यवहारक्षमं शुद्धं कर्मयोग्यं भवेच्च तत् ॥ १८६ ॥

निर्यासं शाकवृक्षस्य श्लक्ष्णवस्त्रेण गालयेत् ।
समूलशिग्रुचूर्णेन निर्याससहितेन च ॥ १८७ ॥

परितस्ताम्रपत्त्राणि दग्ध्वा दग्ध्वा विलेपयेत् ।
वारैः पञ्चभिरेतत् तु काञ्चनं जायते शुभम् ॥ १८८ ॥

फलानि शाकवृक्षस्य पक्वान्यादाय भावयेत् ।
तद्रसेन रसेनापि मञ्जिष्ठासहितेन च ॥ १८९ ॥

तेन कल्केन पत्राणि शुल्वजानि प्रलेपयेत् ।
दहेच्च पुटपाकेन यावद् भवति काञ्चनम् ॥ १९० ॥

सञ्चूर्ण्य वल्कं क्षारीयं तद्रसेन विभावितम् ।
करवीररसैर्युक्तं तेन पत्रं विलेपितम् ॥ १९१ ॥

ताम्रं तज्जायते तारं पुटपाके प्रतापितम् ।
तारोत्तारं भवेत् सम्यग्व्यवहारक्रियोचितम् ॥ १९२ ॥

एवमादिभिरन्यैश्च धातुग्रन्थक्रियाक्रमैः ।
कारयेत् कनकं तारं धनवृद्ध्यै नराधिपः ॥ १९३ ॥

सुवर्णै रजतै रत्नैर्वज्रैराभरणैस्तथा ।
पूर्णो व्यवहारः कार्यः कोशो नित्यं महीभुजा ॥ १९४ ॥

इति धातुवाद-रसायनम् ॥

पुटीकृत्यानले तप्तं यत् स्वर्णं निकषक्षमम् ।
तत् स्यात् षोडशवर्णाख्यं कोशे स्थाप्यं तदेव हि ॥ १९५ ॥

शाकार्कपुष्पसङ्काशं विद्युद्दीप्तिसमप्रभम् ।
शुद्धं भूषणयोग्यं स्यात् सिद्धानां महीभुजाम् ॥ १९६ ॥

कृतं वा निष्करूपेण पत्रं वा पिण्डरूपकम् ।
भूषणत्वेन वा सिद्धं शुद्धं कोशे निधारयेत् ॥ १९७ ॥

धर्मस्यार्थस्य कामस्य साधकं जनरञ्जनम् ।
शुद्धं सुवर्णकोशस्थमापूर्णलक्ष्मीकरं भवेत् ॥ १९८ ॥

---

1 A ०स्तकैः ।

धात्वन्तरसमायुक्तमशुद्धं नैव धारयेत्।
अशक्तं स्वर्णकार्येषु गृहलक्ष्मीविनाशकम् ॥ ३९९ ॥

नागेन मिश्रितं रौप्यं वह्निना परिशोधितम्।
चन्द्रमण्डलसङ्काशं कोशे स्थाप्यं महीभुजा ॥ ४०० ॥

यशःसौभाग्यजननं श्रेष्ठं[1] पुत्रप्रदायकम्।
गृहे विधारितं रौप्यं मलिनं चासुखप्रदम् ॥ ४०१ ॥

रत्नानि धारयेत् कोशे शुद्धानि गुणवन्ति च।
सम्भवं च तथा जातिं गुणं तेषां परीक्ष्य च ॥ ४०२ ॥

कृते युगे कलिङ्गेषु कोसले वज्रसम्भवः।
हिमालये मतङ्गाद्रौ त्रेतायां कुलिशोद्भवः ॥ ४०३ ॥

पौण्ड्रके च सुराष्ट्रे च द्वापरे या च सन्ततिः।
वैरागरे च सोपारे कलौ हीरकसम्भवः ॥ ४०४ ॥

गुणाः पञ्च समाख्याता दोषाः पञ्च प्रकीर्तिताः।
छायाश्चतस्रो विज्ञेया वज्राणां रत्नकोविदैः ॥ ४०५ ॥

षट्कोणत्वं लघुत्वं च समाष्टदलता तथा।
तीक्ष्णाग्रता निर्मलत्वमिमे पञ्च गुणाः स्मृताः ॥ ४०६ ॥

मलो बिन्दुस्तथा रेखा त्रासः काकपदं च यत्।
एते दोषाः समाख्याताः पञ्च वज्रेषु कोविदैः ॥ ४०७ ॥

श्वेता रक्ता तथा पीता कृष्णा छाया चतुर्विधा[2]।
विप्रक्षत्रियवैश्यानां शूद्रजातेर्यथाक्रमम् ॥ ४०८ ॥

यज्ञैर्दानैस्तपोभिश्च यदाप्नोति तदाप्नुयात्।
गुणयुक्तस्य वज्रस्य विप्रजातेर्विधारणात् ॥ ४०९ ॥

---

१ A B श्रेष्ठं। २ B तथाविधा।

जयः पराक्रमस्तस्य शत्रुनाशश्च जायते ।
गुणवत् क्षत्रजातीयं वज्रं वसति यद्गृहे ॥ ४१० ॥

कलाकुशलता द्रव्यं प्रज्ञा क्षेमं यशो भवेत् ।
गुणिनः पविरत्नस्य वैश्यजातेर्विधारणात् ॥ ४११ ॥

परोपकारिता दाक्ष्यं धनधान्यसमृद्धयः ।
गुणयुक्तस्य वज्रस्य शूद्रजातेर्विधारणात् ॥ ४१२ ॥

मले मलिनता ख्याता धारणाद् दंष्ट्रिणा भयम् ।
काणे व्याधिभयं प्रोक्तं मध्ये वह्निभयं भवेत् ॥ ४१३ ॥

दोषेषु बिन्दुरावर्तः परिवर्तो यवाकृतिः ।
चतुर्धैवं समाख्याता बिन्दवो वज्रसंश्रयाः ॥ ४१४ ॥

रक्तोऽथ वर्तुलो बिन्दुरावर्तः सव्यवर्तनः ।
रक्तश्च परिवर्तस्तु रेखा यवाग्रमध्यगः ॥ ४१५ ॥

बिन्दुरायुर्धनं हन्यादावर्तो भयमादिशेत् ।
परिवर्ते भवेद् व्याधिर्यवे तु फलमुच्यते ॥ ४१६ ॥

स च रक्तस्तथा पीतः श्वेतश्च त्रिविधो यवः ।
रक्तवर्णे यवे ख्यातं गजाश्वस्य विनाशनम् ॥ ४१७ ॥

यवे पीते कुलस्यान्तो धनमायुः सिते भवेत् ।
एवं दोषा गुणाश्चोक्ता यवबिन्द्वादिरेखतः ॥ ४१८ ॥

सव्यवक्रा शुभा रेखा वामवक्रा भयङ्करी ।
क्लेशभ्रान्तिकरी छेदा रेखा सर्वभयप्रदा ॥ ४१९ ॥

यवद्वयप्रकृत्या या छेदगा सा मर्काङ्किता ।
रेखा बन्धुविनाशाय जायते वज्रसंस्थिता ॥ ४२० ॥

१ B एवं सव्याप° ।

शुकः काकपदाकारो दृश्यते यः पत्रौ स्थितः ।
स मृत्युमादिशत्याशु धनं वा सकलं हरेत् ॥ ४२१ ॥

भग्नाग्रं भग्नमध्यं च दलहीनं च वर्तुलम् ।
कान्तिहीनं च यद् वज्रं दोषाय न गुणाय तत् ॥ ४२२ ॥

भिन्नभ्रान्तिकरस्त्रासः सन्त्रासं जनयेत् स्फुटम् ।
एवं दोषा गुणाः प्रोक्ता वज्राणां सोमभूभुजा ॥ ४२३ ॥

इति वज्रदोष—गुणाः ॥

कोलाहि-करि-मत्स्यानां शीर्षे मुक्ताफलोद्भवः ।
त्वक्सार-शुक्ति-शङ्खानां गर्भे मुक्ताफलोद्भवः ॥ ४२४ ॥

धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः ।
दुर्लभं तन्महारत्नं देवैस्तत्पात्यतेऽम्बरात् ॥ ४२५ ॥

गजादिजं सुदुष्प्रापं मौक्तिकं तपसा विना ।
मौक्तिकं शुक्तिजं लभ्यमाकरेषु कलौ नृभिः ॥ ४२६ ॥

कुक्कुटाण्डसमं वृत्तं मौक्तिकं निबिडं गुरु ।
घनजं भानुसङ्काशं देवयोग्यममानुषम् ॥ ४२७ ॥

काम्बोजकुम्भसम्भूतं धात्रीफलसमं निभम् ।
आताम्रपिञ्जरच्छायं मौक्तिकं मन्ददीधिति ॥ ४२८ ॥

फणिजं वर्तुलं रम्यं नीलच्छायं महाद्युति ।
पुण्यहीना न पश्यन्ति वासुकेः कुलसम्भवम् ॥ ४२९ ॥

कोलजं कोलसदृशं तद्दंष्ट्रासदृशच्छवि ।
अलभ्यं मनुजै रत्नं मौक्तिकं पुण्यवर्जितैः ॥ ४३० ॥

गुञ्जाफलसमं स्थौल्यात् तिमिजं मौक्तिकं लघु ।
पाटलीपुष्पसदृशं मन्दजाति सुवर्तुलम् ॥ ४३१ ॥

---

१ B °धारं ।

पीता लक्ष्मीप्रदा ज्ञेया मधुरा बुद्धिवर्धनी ।
शुक्ला यशःकरी छाया नीला सौभाग्यनाशनी ॥ ४५६ ॥

इति मौक्तिकपरीक्षा ॥

माषको प्रोच्यते गुञ्जा तास्तिस्रो रूपकं भवेत् ।
रूपकैर्दशभिः प्रोक्तः कलञ्जो नाम नामतः ॥ ४५७ ॥

कांस्यपात्रद्वयं वृत्तं समानं रूपनामतः ।
चतुश्छिद्रसमायुक्तं प्रत्येकं रज्जुयन्त्रितम् ॥ ४५८ ॥

दण्डः कांस्यमयः श्लक्ष्णो द्वादशाङ्गुलसंमितः ।
पक्षद्वयसमानश्च प्रान्तयोर्मुद्रिकायुतः ॥ ४५९ ॥

मध्ये तस्य प्रकर्तव्यः कण्टकः कांस्यनिर्मितः ।
पञ्चाङ्गुलायतस्तस्य मूले छिद्रं प्रकल्पयेत् ॥ ४६० ॥

निवेश्य छिद्रदेशेऽस्य शलाकाङ्गुलमात्रिका ।
शलाके प्रान्तयोस्तस्याः कल्पयेत् तोरणाकृतिः ॥ ४६१ ॥

तोरणस्य शिरोमध्ये कर्तव्या लघुकुण्डली ।
तत्र रज्जुं निबध्नीयात् तां धृत्वा तोलयेत् सुधीः ॥ ४६२ ॥

कलञ्जमानकं द्रव्यमेकदेशे निवेशयेत् ।
अन्यतो जलबिन्दुस्तु तोलनार्थं विनिक्षिपेत् ॥ ४६३ ॥

कण्टके च समे जाते तोरणस्य च मध्यमे ।
तदा समं विजानीयात् तोलनं नाम कोविदः ॥ ४६४ ॥

इति तुलालक्षणम् ॥

चत्वारि त्रीणि युग्मं वा तथैकं वा तुलास्थितम् ।
समं कलञ्जमानेन तदुत्तमतमं क्रमात् ॥ ४६५ ॥

नवमात् पञ्चमं यावत् कलञ्जेन समं यदा ।
तत् क्रमादुत्तमं ज्ञेयं मौक्तिकं रत्नवेदिभिः ॥ ४६६ ॥

चतुर्दशात् समारभ्य दशसङ्ख्यावधि क्रमात् ।
कलञ्जस्य समानत्वात् मौक्तिकं मध्यमं स्मृतम् ॥ ४६७ ॥

आरभ्य विंशतितमात् क्रमात् पञ्चदशावधि ।
लघ्व्यस्ताः कथिता मुक्ता मूल्यं च तदनुक्रमात् ॥ ४६८ ॥

अतः परं च सूक्ष्माणि मौक्तिकानि प्रचक्षते ।
तोलने क्रम एष स्यान्मूल्ये चापि निरूपितः ॥ ४६९ ॥

सूक्ष्माणां स्वल्पकं मूल्यं लघूनां लघुमूल्यकम् ।
मध्यानां मध्यमं मूल्यं गुरूणां बहुमूल्यता ॥ ४७० ॥

कलञ्जद्वयमानेन यद्येकं मौक्तिकं भवेत् ।
न धार्यं नरनाथैस्तद् देवयोग्यमनुत्तमम् ॥ ४७१ ॥

उत्पत्तिराकरश्छाया गुणदोषाः शुभाशुभम् ।
तोलनं मूल्यविन्यासः कथितः सोमभूभुजा ॥ ४७२ ॥

इति मौक्तिकतोलन-मूल्यविन्यासः ॥

सिन्धौ रावणगङ्गायां सिंहले जन्म कीर्तितम् ।
क्षेत्राणि तत्र चत्वारि माणिक्यस्य बुधा जगुः ॥ ४७३ ॥

सिंहलं प्रथमं क्षेत्रं तत्र कालपुरं परम् ।
अन्ध्रं तृतीयमादिष्टं चतुर्थं तुम्बरं स्मृतम् ॥ ४७४ ॥

सिंहले तु भवेद् रक्तं पद्मरागमनुत्तमम् ।
पीतं कालपुरोद्भूतं कुरुविन्दमिति स्मृतम् ॥ ४७५ ॥

अशोकपल्लवच्छायमन्ध्रे सौगन्धिकं विदुः ।
तुम्बरच्छायया नीलं नीलगन्धि प्रकीर्तितम् ॥ ४७६ ॥

उत्तमं सिंहलोद्भूतं निकृष्टं तुम्बरोद्भवम् ।
मध्ययोर्मध्यमं ज्ञेयं माणिक्यं क्षेत्रभेदतः ॥ ४७७ ॥

माणिक्यस्य समाख्याता अष्टौ दोषा मुनीश्वरैः ।
गुणाश्चत्वार आख्याताः छायाः षोडश कीर्तिताः ॥ ४७८ ॥

छायाद्वितयसम्बद्धं द्विच्छायं बन्धुनाशनम् ।
द्विरूपं द्विपदं तेन माणिक्येन पराभवः ॥ ४७९ ॥

सभेदं भिन्नमित्युक्तं शस्त्रघातविधायकम् ।
कर्करं शर्करायुक्तं पशुबन्धुविनाशकृत् ॥ ४८० ॥

दुग्धेन च समालिप्तं लशुनापटमुच्यते ।
अशोभनं तदुद्दिष्टं माणिक्यं मणिकोविदैः ॥ ४८१ ॥

मधुबिन्दुसमच्छायं कोमलं परिकीर्तितम् ।
आयुर्लक्ष्मीं जयं हन्ति सदोषं तस्य धारयन् ॥ ४८२ ॥

रागहीनं जडं प्रोक्तं धनहान्यपवादकृत् ।
धूम्रं धूमसमाकारं विद्युतं भयमावहेत् ॥ ४८३ ॥

ईदृग्दोषयुता निन्द्या मणयो मूल्यवर्जिताः ।
अपि प्राप्ता न ते धार्या गृहे शोभनमिच्छता ॥ ४८४ ॥

माणिक्यस्य गुणाः प्रोक्ताश्चत्वारो मुनिपुङ्गवैः ।
स्निग्धच्छाया गुरुत्वं च नैर्मल्यमतिरक्तता ॥ ४८५ ॥

सर्वलक्षणसम्पूर्णे पद्मरागे गृहस्थिते ।
अश्वमेधफलं तस्य चिरमायुर्जयो भवेत् ॥ ४८६ ॥

छाया स्यात् पद्मरागस्य रक्तकोकनदप्रभा ।
खदिराग्निचकोराक्षी-कोकिलानेत्रसन्निभा ॥ ४८७ ॥

सारसाक्षी चकोरस्य मक्षिपालकस्य सप्तधा ।
एते गुणाः फलं छाया सिंहलोत्यपद्मरागणो ॥ ४८८ ॥

सिन्दूर-लोध्रपुष्पाभा गुञ्जा-किंशुकसन्निभाः ।
छायास्ताः कुरुविन्दस्य चतस्रः परिकीर्तिताः ॥ ४८९ ॥

अच्छत्वात् क्षीरसच्छाया कुङ्कुमोदकसन्निभा ।
ईषद्रक्ता भवेच्छाया सौगन्धिकमणेरियम् ॥ ४९० ॥

नीलोत्पलदलप्रख्या त्वोहवह्निसमप्रभा ।
नीलगन्धिमणेः प्रोक्ते छाये द्वे मणिकोविदैः ॥ ४९१ ॥

इति पद्मरागपरीक्षा ॥

इन्द्रनीलस्य सम्भूतिः सिंहलद्वीपमध्यतः ।
नद्या रावणगङ्गायाः कूले पद्माकरे स्मृता ॥ ४९२ ॥

सितच्छायो भवेद् विप्रस्ताम्रः क्षत्रियजातिकः ।
पीतस्तु वैश्यजातीयो वृषलः कृष्णदीधितिः ॥ ४९३ ॥

दोषांस्तस्य प्रवक्ष्यामि नामभिर्लक्षणैश्च षट् ।
गुणांश्च कथयिष्यामि पञ्चधाऽऽद्रविणा च्छविः ॥ ४९४ ॥

अभ्रवत् पटलं यस्य तदभ्रकमिति स्मृतम् ।
धारणे तस्य सम्पत्तिरायुश्चैव विनश्यति ॥ ४९५ ॥

शर्करामिश्रितं यत् तु तद् विज्ञेयं सशर्करम् ।
तस्मिन् धृते दरिद्रत्वं देशत्यागश्च जायते ॥ ४९६ ॥

भेदसंशयकृत् त्रासस्तेन दंष्ट्रिभयं भवेत् ।
भिन्नं भिन्नमिति ज्ञेयं भार्यापुत्रविनाशनम् ॥ ४९७ ॥

मृत्तिका यस्य गर्भस्था लक्ष्यते रत्नकोविदैः ।
मृत्तिकागर्भकं नाम त्वग्दोषजननं भवेत् ॥ ४९८ ॥

दृषत् प्रलक्ष्यते यस्य गर्भे नीलस्य कोविदैः ।
अश्मगर्भं तदाख्यातं तद्धर्ता परिभूयते ॥ ४९९ ॥

गुरुत्वं स्निग्धकान्तित्वं सुरङ्गं पार्श्वरञ्जनम् ।
तृणग्राहित्वमित्येते गुणाः पञ्च प्रकीर्तिताः ॥ ५०० ॥

नीलीरससमाभासा वेणवीपुष्पसन्निभा ।
लवणीपुष्पसङ्काशा नीलेन्दीवरसप्रभा ॥ ५०१ ॥

अतसीपुष्पसङ्काशा चाषपक्षसमद्युतिः ।
कृष्णाद्रिकर्णिकापुष्पसमानद्युतिधारिणी ॥ ५०२ ॥

मयूरकण्ठसच्छाया शम्भोः कण्ठनिभा तथा ।
विष्णुदेहसमाभासा भृङ्गपक्षसमप्रभा ॥ ५०३ ॥

दोषैस्त्यक्तो गुणैर्युक्त इन्द्रनीलो महामणिः ।
यस्य हस्ते भवेत् तस्य स्थिरमायुर्बलं यशः ॥ ५०४ ॥

क्षीरमध्ये क्षिपेन्नीलं दुग्धं चेन्नीलतां व्रजेत् ।
इन्द्रनीलः स विज्ञेयो रविनन्दनवल्लभः ॥ ५०५ ॥

इन्द्रनीले धृते सौरिः प्रसन्नः सततं भवेत् ।
आयुश्च महतीं लक्ष्मीमारोग्यं च प्रयच्छति ॥ ५०६ ॥

इतीन्द्रनीलपरीक्षा ॥

तुरुष्कविषयेऽम्भोधेः समीपे विषमस्थले ।
भवेन्मरकतं रत्नं गुणो दोषोऽस्य कथ्यते ॥ ५०७ ॥

दोषाः सप्त भवन्त्यस्य गुणः पञ्चविधः स्मृतः ।
भवेदष्टविधा च्छाया मणेर्मरकतस्य हि ॥ ५०८ ॥

अस्निग्धं रूक्षमित्युक्तं व्याधिस्तस्मिन् धृते भवेत् ।
विस्फोटं स्यात् सपिटकं तत्र शस्त्रहतिर्धृते ॥ ५०९ ॥

सपाषाणे भवेद् बन्धुनाशो मरकते धृते ।
विच्छायं मलिनं प्राहुर्व्याधिर्वै तेन जायते ॥ ५१० ॥

कर्करं शर्करायुक्तं पुत्रशोकप्रदं धृतम् ।
जठरं कान्तिहीनं स्याद् दंष्ट्रिवह्निभयावहम् ॥ ५११ ॥

कल्माषवर्णं शबलं ततो मृत्युभयं भवेत् ।
इति दोषाः समाख्याता वर्ण्यन्ते साम्प्रतं गुणाः ॥ ५१२ ॥

निर्मलं कथितं स्वच्छं गुरु स्याद् गुरुतायुतम् ।
स्निग्धं रौक्ष्यविनिर्मुक्तमरजस्कमरेणुकम् ॥ ५१३ ॥

सुरागं रागबहुमिति पञ्च गुणाः स्मृताः ।
एतैर्युक्तं मरकतं सर्वपापभयापहम् ॥ ५१४ ॥

बर्हिपिच्छसमाभासा चाषपक्षसमा परा ।
हरित्काचनिभा चान्या तथा सेवालसन्निभा ॥ ५१५ ॥

खद्योतपृष्ठसङ्काशा बालकीरगरुत्समा ।
नवशाद्वलसच्छाया शिरीषकुसुमोपमा ॥ ५१६ ॥

एवमष्टौ समाख्याताश्छाया मरकताश्रयाः ।
छायाभिर्युक्तमेताभिः श्रेष्ठं मरकतं भवेत् ॥ ५१७ ॥

सेवालवल्लरीच्छायं सुरङ्गं त्रासवर्जितम् ।
अनर्घ्यं तं मरकतं प्राहुः सर्वविषापहम् ॥ ५१८ ॥

इति मरकतपरीक्षा ॥

हिमालये सिंहले च विन्ध्ये तापीतटे तथा ।
स्फटिकं जायते रत्नं नानारूपमनोहरम् ॥ ५१९ ॥

हिमाद्रौ चन्द्रसङ्काशं स्वच्छं कान्तियुतं भवेत् ।
सूर्यकान्तं च तत्रैकं चन्द्रकान्तं तथा परम् ॥ ५२० ॥

सूर्यांशुस्पर्शमात्रेण वह्निं वमति तत्क्षणात् ।
सूर्यकान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः ॥ ५२१ ॥

पूर्णेन्दुकरसंस्पर्शादमृतं क्षरति क्षणात् ।
चन्द्रकान्तं तदाख्यातं दुर्लभं स्यात् कलौ युगे ॥ ५२२ ॥

अशोकपल्लवच्छायं दाडिमीबीजसप्रभम् ।
विन्ध्ये तापीतटोद्देशे जायते मन्दकान्तिकम् ॥ ५२३ ॥

सिंहले जायते कृष्णमाकरे नीलगन्धिके ।
पद्मरागभवस्थाने विविधं स्फटिकं भवेत् ॥ ५२४ ॥

इति स्फटिकपरीक्षा ॥

ईषत्पीतं पविच्छायं स्वच्छं कान्त्या मनोहरम् ।
पुष्परागमिति ख्यातं रत्नं रत्नपरीक्षकैः ॥ ५२५ ॥

इति पुष्परागपरीक्षा ॥

सितं च धूम्रसङ्काशमीषत्कृष्णं सितं तु यत् ।
वैडूर्यं नाम तत् प्रोक्तं मार्जारनयनोपमम् ॥ ५२६ ॥

इति वैडूर्यपरीक्षा ॥

मधुबिन्दुसमं वाऽपि गोमूत्रादिसमप्रभम् ।
गोमेदकं तदाख्यातं रत्नं सोमपरीक्षकैः ॥ ५२७ ॥

इति गोमेदपरीक्षा ॥

सेतौ सागरमध्ये तु जायते वल्लरी तु या ।
विद्रुमाख्या सुरक्ता सा दुर्लभा रत्नरूपिणी ॥ ५२८ ॥

पाषाणत्वं भजन्त्येषा प्रयत्नात् कथिता सती ।
प्रवालं नाम तद् रत्नं वर्णाढ्यं मन्दकान्तिकम् ॥ ५२९ ॥

इति विद्रुमपरीक्षा ॥

पद्मरागस्य नीलस्य ये दोषाः परिकीर्तिताः ।
तैरेव दूषितं रत्नं सन्त्याज्यं स्फटिकं नृपः ॥ ५३० ॥

१ B सिताभ्रधूम० । २ B रत्नं ०परीक्षकैः ।

गौरवं स्वच्छता कान्तिः काठिन्यं रत्नजा गुणाः ।
विहाय वज्रं नान्येषु लाघवं शोभनं भवेत् ॥ ५११ ॥

रत्नानां रूपसाम्यं तु धूर्ताः कुर्वन्ति यत्नतः ।
तेषां परीक्षां वक्ष्यामि रत्नारत्नविचारिणीम् ॥ ५१२ ॥

वज्रेण वेधयेद् वज्रं कृत्रिमं चेद् विभिद्यते ।
कृत्रिमं मौक्तिकं नश्येत् क्षालितं लवणाम्भसा ॥ ५१३ ॥

माणिक्यार्दानि रत्नानि घर्षणात् क्वथनादपि ।
शोधयेद् रत्नवित् प्राज्ञः कृत्रिमं शुद्धमेव च ॥ ५१४ ॥

त्यजति क्वथितं रागं कृत्रिमं तदुदीरितम् ।
मार्दवं दृश्यते घृष्टे ज्ञेयं तत् कृत्रिमं बुधैः ॥ ५१५ ॥

एवं विचार्य रत्नानि कोशे सञ्चिनुयान्नृपः ।
आयुर्लक्ष्मीं जयं कीर्त्तिं लभते रत्नसङ्ग्रहात् ॥ ५१६ ॥

इति रत्नपरीक्षा ॥

स्तोकस्तोकेन पूर्यन्ते तडागा जलबिन्दुभिः ।
मृत्तिकाकणसङ्घातैर्वल्मीकं वर्धते यतः ॥ ५१७ ॥

क्षौद्रं च राजवित्तं च स्तोकस्तोकेन वर्द्धते ।
तस्माद् राज्ञा प्रयत्नेन कोशे द्रव्यस्य सञ्चयः ॥ ५१८ ॥

राष्ट्रादायातवित्तस्य चतुर्भागान् प्रकल्पयेत् ।
धर्मार्थकामसिद्ध्यर्थं कुर्याद् भागत्रयं नृपः ॥ ५१९ ॥

---

१ B प्रयच्छन्ति मनीषिताम् ।

भागेनैकेन चावश्यं कार्यः कोशस्य सञ्चयः ।
कोशवान् सुखमाप्नोति कोशहीनस्तु सीदति ॥ ५४० ॥

इति कोशाध्यायः ॥ ४ ॥

जलदुर्गं गिरिदुर्गं दुर्गं पाषाणनिर्मितम् ।
इष्टिकाभिः कृतं दुर्गं दुर्गं स्यान्मृत्तिकामयम् ॥ ५४१ ॥

वनदुर्गं मरुदुर्गं दुर्गं दारुविनिर्मितम् ।
नरदुर्गं च नवमं तेषां वक्ष्यामि लक्षणम् ॥ ५४२ ॥

अगाधेनाथ तोयेन वेष्टितं जलजं भवेत् ।
दुरारोहं च शैलाग्रमुदकेन समन्वितम् ॥ ५४३ ॥

गिरिदुर्गं समाख्यातं नयशास्त्रविशारदैः ।
पाषाणघटितं दुर्गमश्मदुर्गमुदीरितम् ॥ ५४४ ॥

इष्टिकाभिः कृतं सम्यक् सुधालिप्तं समुज्ज्वलम् ।
इष्टिकादुर्गमाख्यातं परिखावेष्टितं महत् ॥ ५४५ ॥

मृदा विरचितं यत् तु तद् दुर्गं मृत्तिकामयम् ।
वनदुर्गं समाख्यातं घनं कण्टकशाखिभिः ॥ ५४६ ॥

अन्तःस्थैः सञ्चितं तोयं बहिःस्थानां च दुर्लभम् ।
मरुदुर्गं समाख्यातं मरुदेशसमं यतः ॥ ५४७ ॥

दारुभिर्वेणुभिः क्लृप्तं दुर्गं दारुमयं स्मृतम् ।
शस्त्रहस्तैर्महायोधैर्निर्मितं नरदुर्गकम् ॥ ५४८ ॥

एतेषामुत्तमं दुर्गं गिरिजं जलजं तथा ।
मध्यमानीतराण्याहुः कनिष्ठं स्याच्च दारुजम् ॥ ५४९ ॥

इति नवविधदुर्गलक्षणम् ॥

दुर्गे यन्त्राणि कार्याणि नाना प्रहरणानि च ।
दुर्गद्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ॥ ११० ॥

सञ्चयश्चात्र सर्वेषामायुधानां विधीयते ।
अश्मनां च प्रभूतानां सिकतानां तथैव च ॥ १११ ॥

कुद्दालरज्जुवेत्राणां पिटकानां तथैव च ।
सर्वेषां शिल्पभाण्डानां तत्र सञ्चय इष्यते ॥ ११२ ॥

औषधानां च सर्वेषां वादित्राणां तथैव च ।
यवसानां प्रभूतानामिन्धनानां च सञ्चयः ॥ ११३ ॥

गुडस्य सर्वतैलानां घृतस्य मधुनस्तथा ।
तथा च सर्वधान्यानां पशुगोमययोरपि ॥ ११४ ॥

कुम्भेष्वाशीविषा धार्या व्याघ्राः सिंहाश्च बन्धनैः ।
अन्यानि सर्ववस्तूनि दुर्गे सन्निनुयान्नृपः ॥ ११५ ॥

इति दुर्गाध्यायः ॥ ५ ॥

मौलं भृत्यं तथा मैत्रं श्रेणमाटविकं बलम् ।
अमित्रमपरं षष्ठं सप्तमं नोपलभ्यते ॥ ११६ ॥

वंशक्रमागतं मौलं भृत्यं द्रविणदानतः ।
मैत्रीकरणतो मैत्रं श्रेष्ठमेतद् बलत्रयम् ॥ ११७ ॥

सम्बद्धं जन्मकर्मभ्यां निश्चितं समयैश्च यत् ।
तद् बलं श्रेणमाख्यातं तच्च मध्यममिष्यते ॥ ११८ ॥

पर्वतोपान्तसंवासिनिषादम्लेच्छजातिकम् ।
अधमं तत् समाख्यातं बलमाटविकं बुधैः ॥ ११९ ॥

शात्रवास्तु समाक्रान्ता दासभावमुपस्थिताः ।
तेषां बलं तु विज्ञेयममित्रजबलं बुधैः ॥ १२० ॥

सन्निधौ न च तत् कार्यं विश्वसेन्न कदाचन ।
युद्धेषु पुरतः कार्यं नृपैर्युद्धविशारदैः ॥ १६१ ॥

लोहचर्मविनिर्माणाः कार्पासरचिता अपि ।
शल्कैश्च घटिताः कार्याः सन्नाहाः सुदृढाः सदा ॥ १६२ ॥

बाहुत्राणैः शिरस्त्राणैरङ्गत्राणैश्च संवृतम् ।
पताकाभिर्ध्वजैः स्तम्भैः शोभमानं भवेद् बलम् ॥ १६३ ॥

वेत्रैर्वंशैश्च काष्ठैश्च चर्मभिर्दृढबन्धनैः ।
वर्तुलानि विधेयानि वर्माणि बलगुप्तये ॥ १६४ ॥

व्याघ्रचर्मपिनद्धानि शातकौम्भमयानि च ।
फलकानि विचित्राणि कारयेत् स्वबले सदा ॥ १६५ ॥

मौले बले तु ये मुख्यास्तेषां कुर्वीत माननम् ।
रत्नैर्विभूषणैर्वस्त्रैः प्रियैर्वाक्यैर्मनोहरैः ॥ १६६ ॥

वृत्तिं तेषां प्रकुर्वीत यथायोग्यं सुपुष्कलाम् ।
ग्रामेण ग्रामयुग्मेन ग्रामैर्वा हेमसञ्चयैः ॥ १६७ ॥

भृत्यानां वेतनं दद्याद् यथाकालमतन्द्रितः ।
प्रत्यहं प्रतिमासं वा मासत्रयमथापि वा ॥ १६८ ॥

चतुर्मासोदितं वाऽपि मासषट्कमथापि वा ।
संवत्सरमितं वाऽपि कार्यापेक्षितया नृपः ॥ १६९ ॥

प्रत्यहं वीक्षणं कार्यमलुब्धैरात्मपूरुषैः ।
पक्षे पक्षे स्वयं पश्येद् वेतनैर्विधृतान् भटान् ॥ १७० ॥

कृतश्रमान् सदोत्साहान् रणोचितधृतायुधान् ।
जितश्रमाणां शूराणां सायुधानां नरेश्वरः ॥ १७१ ॥

दद्यात् प्रसादं भृत्यानां सोत्साहास्ते भवन्त्यत: ।
अलसानायुधैर्हीनान् दण्डयेत् तान् महीपति: ॥ ५७२ ॥

इति पदातिलक्षणम् ॥

सैन्धवैर्यवनोद्भूतै: काम्बोजप्रभवैरपि ।
शिक्षितैर्बहुभिर्वाहै: संयुक्तं बलमुत्तमम् ॥ ५७३ ॥

साध्यन्ते तुरगैरेव दूरस्था अपि वैरिण: ।
लभ्यते तुरगै: कीर्त्तिर्यस्याश्वास्तस्य भू: स्थिरा ॥ ५७४ ॥

वाहिता: पोषिता: सम्यग्वाहा: कार्या महीभुजा ।
अवाहिता न योग्यास्ते मार्गे सङ्ग्रामकर्मणि ॥ ५७५ ॥

दूर्वादियवसैरश्वान् खादनैश्चणकादिभि: ।
स्नेहैर्घृतादिकैर्भोज्यै रसैश्च परिपोषयेत् ॥ ५७६ ॥

प्रत्यहं वाहयेदश्वान् प्रात:काले प्रयत्नत: ।
ततस्ते कर्मयोग्या: स्युर्विनोदे समरेऽध्वनि ॥ ५७७ ॥

रूक्षाहारैरजीर्णेन वाहनस्यातियोगत: ।
शीतातपपरिक्लेशैरश्वानां रोगसम्भव: ॥ ५७८ ॥

तेषां चिकित्सितं कार्यमश्वायुर्वेदकोविदै: ।
अविलम्बेन दातव्यमौषधं रोगशान्तये ॥ ५७९ ॥

उत्थायोत्थाय विशति गात्रं सङ्कोचयत्यपि ।
आध्मातो विह्वलीभूत: शीर्षं धारयते गुरु ॥ ५८० ॥

शकृत् त्यजति सामं च सशब्दं जठरानिल: ।
व्याधे: शूलाभिधस्यैतल्लक्ष्मैतत् परिकीर्तितम् ॥ ५८१ ॥

नवद्वारेषु निक्षिप्य शुण्ठीचूर्णं तुरङ्गम: ।
सञ्चार्य: शनकैस्तेन प्रकृतिं याति मारुत: ॥ ५८२ ॥

तथापि यदि नो सुस्थस्तदाऽस्यां प्रयोजयेत् ।
सिद्धार्थलवणं व्योषयुजा तैलेन वाजिनः ॥ ५८३ ॥

कुक्षी च जठरं पृष्ठं स्वेदयेद् यत्नवान् भिषक् ।
सार्द्रकम्बलगूढेन सन्तप्तेनाश्मना मुहुः ॥ ५८४ ॥

तथापि यदि नो शाम्येत् तदा कुर्यान्निरूहणम् ।
चिञ्चाफलकृतं कल्कं काञ्जिकेन विमिश्रितम् ॥ ५८५ ॥

सिद्धार्थसैन्धवोपेतं कन्दर्पफलसंयुतम् ।
शतपुष्पामरोपेतं तिलतैलेन मिश्रितम् ॥ ५८६ ॥

निरूहणे नियुञ्जीत तेन वायुः प्रशाम्यति ।
सुस्थात्मा जायते वाजी यदि नानेन कर्मणा ॥ ५८७ ॥

कुक्षिद्वये तदा तस्य तप्तलोहशलाकया ।
बिन्दवो बहवः कार्याः पङ्क्तिद्वयसमाश्रिताः ॥ ५८८ ॥

तत्क्षणे जायते सुस्थो जठरं शिथिलं भवेत् ।
मनःप्रसत्तिं भजते तुरगो नात्र संशयः ॥ ५८९ ॥

अन्येद्युर्दापयेत् पानं पाचनं वह्निदीपनम् ।
एला मागधिका शुण्ठी तिक्तं लवणपञ्चकम् ॥ ५९० ॥

वचा चातिविषा हिङ्गु चूर्णमेतैः प्रकल्पितम् ।
पलार्द्धं सुरया युक्तं सुराप्यर्धोदकोन्मिता ॥ ५९१ ॥

क्रमोऽयं सर्वशूलानां शान्तये परिकीर्तितः ।
गुडेन सहितां शुण्ठीं केवलां वा प्रयोजयेत् ॥ ५९२ ॥

त्रिफला पिप्पलीमूलं त्र्यूषणं जीरकद्वयम् ।
रामठं तिन्तिडीकं च यवानी गौरसर्षपाः ॥ ५९३ ॥

अजमोदोऽश्वगन्धा च पटोलं चाम्लवेतसम् ।
त्रिवृन्निम्बश्च मुस्ता च पर्पटं कटुरोहिणी ॥ ५९४ ॥

दाडिमं कृष्णलवणं सैन्धवं विडमेव च।
सामुद्रं काचलवणं सर्वमेकत्र चूर्णयेत् ॥ ५९५ ॥

पलमेकं प्रयुञ्जीत वातरोगे घृतान्वितम्।
पित्तोद्भवेषु रोगेषु मधुशर्करयान्वितम् ॥ ५९६ ॥

कफजन्मसु रोगेषु दापयेत् सुरया समम्।
आरनालयुतं दत्तं शूलाध्मानहरं परम् ॥ ५९७ ॥

युक्तं मांसरसेनैतद् वाजिनां पुष्टिवर्धनम्।
उष्णोदकेन वा दत्तं सर्वरोगहरं परम् ॥ ५९८ ॥

श्लेष्मा समुत्कटोऽश्वानां नासारन्ध्रात् स्रवेद् यदि।
तदा सिंहाणको रोगस्तस्य वक्ष्ये चिकित्सितम् ॥ ५९९ ॥

तैलं सिद्धार्थकोद्भूतमजामूत्रविमिश्रितम्।
सिंहीफलरसोन्मिश्रं नस्यं सिंहाणकापहम् ॥ ६०० ॥

शुण्ठी दुरालभा मुस्ता कर्चूरं बृहतीद्वयम्।
भार्ङ्गी कर्कटशृङ्गी च वचा पुष्करपिप्पली ॥ ६०१ ॥

घृतेन मधुना वापि सितया च समन्वितम्।
चूर्णं लेहे प्रयुञ्जीत कासहिक्काविनाशनम् ॥ ६०२ ॥

रसाजीर्णे समुत्पन्ने सर्वगात्रं जडं भवेत्।
क्लेशाद् यत् क्रमते वाजी तस्य वच्मि प्रतिक्रियाम् ॥ ६०३ ॥

रसार्तस्य प्रयोक्तव्यं लङ्घनं तापवावधि।
कृष्णमृत्तिकया लिम्पेत् सर्वगात्राणि कोष्णया ॥ ६०४ ॥

शिरावेधः प्रकर्तव्यः प्रबले गात्रगौरवे।
उरसः पुरतो भागे पश्चाद्भाग उपाण्डजे ॥ ६०५ ॥

पूर्वपश्चिमकायस्य गौरवे चाधिके सति।
शिराः सर्वाः प्रमोक्तव्या वंक्षोपाण्डगता अपि ॥ ६०६ ॥

पथ्यां गुडसमोपेतां पिचुमन्ददलान्विताम् ।
प्रदद्यात् रसपाकार्थं जठराग्निप्रदीपनम् ॥ ६०७ ॥

चलत्यूर्ध्वमधो मुष्कः पीडां प्रकुरुते भृशम् ।
यस्मिन् भागे चलेन्मुष्कस्तेन पादेन लङ्घति ॥ ६०८ ॥

मुष्कसञ्चलनाख्याली तस्य वक्ष्ये चिकित्सितम् ।
तैलाभ्यङ्गः प्रकर्तव्यः स्वेदो धान्यसमुद्भवः ॥ ६०९ ॥

निवाते स्थापयेदश्वमुष्णमन्नं प्रदापयेत् ।
उपाण्डजा च मोक्तव्या भिषजा तद्गता शिरा ॥ ६१० ॥

तथाप्यशान्तौ योक्तव्यो निरूहः सानुवासनः ।
चाग्निभागत्रिके कार्यमग्निकर्म विचक्षणैः ॥ ६११ ॥

शङ्कुवत् तिष्ठतः कर्णौ नेत्रयोः परिवर्तनम् ।
स्तम्भस्सर्वेषु गात्रेषु भवेदूर्ध्वकर्णकेऽनिलात् ॥ ६१२ ॥

अभ्यङ्गो मर्दनं स्वेदः कर्तव्यश्च प्रयत्नतः ।
शङ्खयोर्मन्ययोः पुच्छे शिरावेधः प्रशस्यते ॥ ६१३ ॥

कर्णमूलात् स्कन्धपार्श्वात् पृष्ठवंशस्य पार्श्वगे ।
निकषं पञ्चमपार्श्वे रेखं स्पृशान्तविस्थिते ॥ ६१४ ॥

कारयेत् नस्यकर्मेण घृतेनाभ्यञ्जनं त्र्यहम् ।
जलमुष्णं यवक्षारमिश्रं तैलेन पाययेत् ॥ ६१५ ॥

मन्ययोः स्तब्धता यस्य स्वेदादिस्तस्य पूर्ववत् ।
मन्यावेधे शिरावेधं नस्यं यत्नेन कारयेत् ॥ ६१६ ॥

आपा शुण्ठी निशा रास्ना हिङ्गु कुष्ठं रसाञ्जनम् ।
कणा प्रियङ्गु तच्चूर्णं रास्नाक्वाथेन भावनम् ॥ ६१७ ॥

गोमूत्रबर्हिणः पिच्छमच्छमल्लस्य दन्तिनः ।
केशा नखाश्च दन्ताश्च सिद्धार्थाश्चेति चूर्णितैः ॥ ६१८ ॥

एतैः प्रकल्पितो धूपो मन्दुरासु प्रधूपितः ।
अश्वकायगतान् सर्वान् ग्रहानुच्चाटयत्यलम् ॥ ६१९ ॥

इत्यश्ववैद्यकम् ॥

वारणैर्भद्रजातीयैः कालिङ्गवनजन्मभिः ।
शिक्षितैः सज्जितैः शूरैर्लभ्यते विजयो युधि ॥ ६२० ॥

शूरो रूढो महाकायः सर्वलक्षणसंयुतः ।
एको विजयते दन्ती मदघूर्णितलोचनः ॥ ६२१ ॥

मुख्यं दन्तिबलं राज्ञां समरे विजयैषिणाम् ।
तस्मान्निजबले कार्या बहवो वारणोत्तमाः ॥ ६२२ ॥

ततस्तेषां महीपालः पोषणे यत्नवान् भवेत् ।
राजान्नैर्घृतसम्मिश्रैर्दध्ना च परिलोडितैः ॥ ६२३ ॥

पुष्टमांसरसोपेतैरिक्षुकाण्डैः सुधासमैः ।
शुकपक्षमनीकाशशालिपुञ्जैर्मनोहरैः ॥ ६२४ ॥

नवगोधूमकुल्माषैर्यावनालैः फलान्वितैः ।
हरितैश्च तथा शुष्कैस्तृणैः कालोचितैरपि ॥ ६२५ ॥

त्रिविधैः क्षीरपानैश्च शर्करारससंयुतैः ।
द्विकालं जलपानैश्च तथा तोयावगाहनैः ॥ ६२६ ॥

मृत्तिकामृदुशय्याभिः पांसुक्रीडनकैरपि ।
प्रीणयेद् द्विरदान् नित्यं यथा पुष्टा भवन्ति ते ॥ ६२७ ॥

बन्धनात् ताडनाद् व्याधेर्वनसौख्यविचिन्तनात् ।
असात्म्यादशनोऽजीर्णादायासाज्जागरादपि ॥ ६२८ ॥

जायन्ते करिणां रोगास्तेषां कार्यं चिकित्सितम् ।
औषधैर्वनसम्भूतैरापणादाहृतैरपि ॥ ६२९ ॥

चूर्णं दशपलं दद्यात् प्रत्यरत्नि विषाणिनाम् ।
कल्कं तद् द्विगुणं क्वाथमाढकं परिभाषितम् ॥ ६३० ॥

द्रव्ये मूलं द्रवे तोयं समभागावशेषितम् ।
प्रयोगकालः काले च मूत्रे मूत्रं च दन्तिनः ॥ ६३१ ॥

नवबन्धनदुःखार्तं तोयं द्रोणीषु पाययेत् ।
यामार्धनाडिकाशिष्टे दिने निस्सारयेज्जलात् ॥ ६३२ ॥

आस्नानयेत् ततो नागं शतधौतेन सर्पिषा ।
सेचयेत् सर्वगात्रेषु दिनसप्तं विचक्षणः ॥ ६३३ ॥

ततो दिनद्वयादूर्ध्वं घृतेनैव प्रसेचयेत् ।
शीतार्तं सेचयेन्नागं तैलेनैकेन कोविदः ॥ ६३४ ॥

ह्रासयेत् क्रमशस्तस्य कालं तोयावगाहने ।
इक्षून् बिसमृणालानि मधुराश्च महीरुहः ॥ ६३५ ॥

कदलीकन्दशालूकैः शृङ्गाटककसेरुकम् ।
मधुकाकोलवाराणां मूलमारग्वधस्य च ॥ ६३६ ॥

मनःप्रीतिकरं दद्यादेतत्सन्तापशान्तये ।
व्याधियुक्तस्य नागस्य वक्ष्याम्यथ चिकित्सितम् ॥ ६३७ ॥

आदौ रोगपतिं वक्ष्ये ज्वरं ब्रह्मभाषितम् ।
नामभिर्बहुभिर्युक्तं जन्मन्यन्ते च यो भवेत् ॥ ६३८ ॥

ज्वरो नरेषु विख्यातः पाकलः तापजन्मसु ।
अभितापस्तुरङ्गेषु धारको रासभेष्वसौ ॥ ६३९ ॥

१ C E पाकलः २ D स्तरको ।

उष्ट्रेष्वैलसकः प्रोक्तो गोषु प्रोक्तस्तथेश्वरः ।
अंशको दन्दशूकेषु हारिद्रो महिषेष्वपि ॥ ६४० ॥

अजाविके प्रलापः स्यान्मृगरोगो मृगेष्वपि ।
अवपातः शकुन्तेषु मत्स्येष्विन्द्रमदाभिधः ॥ ६४१ ॥

गुल्मेषु ग्रन्थिको ज्योतिर्वनस्पत्यौषधीष्वपि ।
पुष्पेषु पर्वतः प्रोक्तो रूपको नलिनीष्वपि ॥ ६४२ ॥

धान्येषु चूर्णकः ख्यातः कोद्रवेषु छलः स्मृतः ।
शाकेषु मधुको भूम्यामूषरोऽप्सु च नीलिका ॥ ६४३ ॥

अमीभिर्नामभिर्लोके ज्वर एको निगद्यते ।
विहाय मानवानन्ये ज्वरं सोढुमनीश्वराः ॥ ६४४ ॥

पाकलस्य ततश्चास्य चिकित्सा नोपदिश्यते ।
अन्तर्धातून् पुरो व्याप्य बहिः पश्चात् प्रकाशते ॥ ६४५ ॥

दुश्चिकित्सस्ततश्चासौ पाकलो मृत्युरूपकः ।
आचार्यैर्बहुभिस्तस्माच्चिकित्सा नास्य वर्णिता ॥ ६४६ ॥

सुवहा सुरसा दारु मुस्ता-कुष्ठ-रसोनकम् ।
मधुशीर्ष-विडङ्गौ च भार्ङ्गी सिद्धार्थकद्वयम् ॥ ६४७ ॥

मूलकं पञ्चकोलं च करञ्जद्वितयं तथा ।
महान्ति पञ्चमूलानि कफवातप्रशान्तये ॥ ६४८ ॥

गुडूची पर्णिकायुग्मं द्वे मेदे जीवकर्षभौ ।
काकोल्यावश्वगन्धा च विदारी च शतावरी ॥ ६४९ ॥

वातपित्तभवान् रोगानशेषान् सामजन्मनाम् ।
चूर्णः कल्कः कषायो वा योगोऽयं हन्ति निश्चितम् ॥ ६५० ॥

---

१ D° षु श्वास° । २ A अन्तिको । ३ C E पाकल° । ४ C E पाकलो

पटोलपाठाकुष्ठानि निम्बशाल्यमृता विषा ।
धान्यकं पर्पटं तिक्ता—वत्सके कफपित्तजित् ॥ ६५१ ॥

हिङ्गु सौवर्चलं शुण्ठी गुडं शूलस्य शान्तये ।
म्यूषणेनाञ्जनं चाक्ष्णोः शुण्ठ्या केवलयाऽपि वा ॥ ६५२ ॥

अश्वगन्धा कणा रात्रिः कृमिघ्नं रसपञ्चकम् ।
पृथक् पृथक् पलान्यष्टौ वरिष्ठो मुष्टिमात्रकः ॥ ६५३ ॥

पञ्चभिर्लवणैर्युक्तो योगोऽयं हन्ति मारुतम् ।
मूत्रकृच्छ्रमथाध्मानं शूलं चापि व्यपोहति ॥ ६५४ ॥

कुटजं शृङ्गवेरं च यवक्षारं च चित्रकम् ।
पूतिद्वयं च सिद्धार्थं विडङ्गातिविषा घनः ॥ ६५५ ॥

पिप्पली पिप्पलीमूलं रजनी शिग्रु कुष्ठकम् ।
सिन्धुजातं वचा हिङ्गु चूर्णितो गोमयान्वितः ॥ ६५६ ॥

योगोऽयं जाठरस्याग्नेः करिणां दीपनः परः ।
सामवायुं हिनस्त्याशु सामवातोद्भवा रुजः ॥ ६५७ ॥

सैन्धवं जीरकं दन्ती शृङ्गवेरं फलत्रयम् ।
करञ्जद्वितयं कृष्णा पटोलं निम्बपल्लवाः ॥ ६५८ ॥

ज्योतिष्मती गुडूची च वासा चेति सुचूर्णितः ।
पिण्डो शूलोदरं हन्ति वह्निमाशु करोति च ॥ ६५९ ॥

त्रिवृदर्कः स्नुही दन्ती नीली लवणपञ्चकम् ।
शाम्भी च रेचनाः शूलकुम्याध्मानविनाशनाः ॥ ६६० ॥

पाठा-पटोल-कुष्ठानि निम्बभूनिम्बपर्पटम् ।
ज्योतिष्मती स्नुही वासः चव्यग्रन्थिकहिङ्गुकम् ॥ ६६१ ॥

वचा-कटफल-रोध्राणि चित्रकं बृहतीफले ।
तिक्ता दारुकणा रात्रिः करञ्जं त्रिफला तथा ॥ ६६२ ॥

त्रिकटु त्रायमाणा च पौष्करं गजपिप्पली ।
धातकी चेति चूर्णोऽयं मधुना कण्ठरोगनुत् ॥ ६६३ ॥

सैन्धवं नागरं कुष्ठं वचा शिग्रु निशाद्वयम् ।
सिद्धार्थक-यवक्षारौ सर्वमेकत्र चूर्णितम् ॥ ६६४ ॥

दध्ना विलोडितं कोष्णं कफवातजशोफजित् ।
स्वेदं च कारयेच्छोफे प्रच्छन्नं वा यथोचितम् ॥ ६६५ ॥

शोफे विपाटिते पक्वे द्विपविट् सैन्धवान्विता ।
शेपर्णाया प्रयत्नेन व्रणान्तः पूयशान्तये ॥ ६६६ ॥

कुप्यत्यसृक् च पित्तं च जाते सद्यःक्षते भृशम् ।
घृतमाक्षिकपूर्णं तद्वु विधातव्यं दिनत्रयम् ॥ ६६७ ॥

तिला निम्बस्य पत्राणि रजनी चेति पेषितम् ।
मधुयुक्तं व्रणानां स्याच्छोधनं रोपणं परम् ॥ ६६८ ॥

कतकस्य फलं रोध्रं मधुकं चन्दनं घनम् ।
प्रपौण्डरीकं मञ्जिष्ठा वालकोशीरकं तथा ॥ ६६९ ॥

एभिर्विरचिता वर्तिश्चूर्णमाश्चोतनं तथा ।
सर्वेषामक्षिरोगाणां शस्यते सामजन्मनाम् ॥ ६७० ॥

क्षीरद्रुमाणां निष्काथे त्रिवृतं निक्षिपेदनु ।
त्रिफला रोचनं लाक्षा सिन्दूरं रोध्रगुग्गुलम् ॥ ६७१ ॥

भल्लात-रजनी-घोण्टाफल-कार्मार(म)-सैन्धवम् ।
सौराष्ट्रिकाञ्जनं चैव रसं मर्ज्जसमुद्भवम् ॥ ६७२ ॥

श्रीवेष्टं चेति सञ्चूर्ण्य क्वाथे सम्प्रिश्रयेत् ततः ।
दत्वा विघट्टयंस्तज्ज्ञः शनैर्दृढमिना भिषक् ॥ ६७३ ॥

लेहवत् तत्तु घनीभूतं पिच्छलं तत्प्रलेपयेत् ।
द्विपानां तलबन्धार्थं कल्पयेत् सुविचक्षणः ॥ ६७४ ॥

इति गजचिकित्सा ॥

पर्णिका मुद्गपर्णी माषपर्णी। उग्रगन्धा वचा-रसोनौ । [illegible]श्वकः। पूतिद्वयं कृष्णा पिप्पली । रामा आरग्वधः । ग्रन्थिकं पिप्पलीमूलम् । कटफलं काश्मर्यम् । सौगन्धिका तुवरमृत्तिका । त्रिवृतं त्रिस्नेहम् । श्रीवेष्टः सरलद्रुमनिर्यासः । ६७७ ॥

इति गजौषधिनिघण्टुः ।

मुख्यं दन्तिबलं राज्ञां समरं विजयैषिणाम् ।
तस्माद्गजबले कार्या बहवो द्विरदा नृपैः ॥ ६७८ ॥
उपचारान् प्रकुर्वीत दानार्थं करिणां नृपः ।

अनेकायुधसङ्कीर्णाः पताकाध्वजराजिताः ।
चतुर्भिस्तुरगैर्युक्ता दृढाः सारथिनोदिताः ॥ ६७९ ॥

महारथैः समाक्रान्ता बहवः स्यन्दना नृपैः ।
चतुरङ्गे बले कार्या रणे विजयकाङ्क्षिभिः ॥ ६८० ॥

खड्गचर्मधराः केचिदन्ये स्युः कुन्तपाणयः ।
भल्लचक्रधराः केचित् केचिन्मुद्गरपाणयः ॥ ६८१ ॥

धनुर्धरास्तथा केचित् केचित् परशुपाणयः ।
शक्तिशूलधराः केचित् केचिच्च क्षुरिकाधराः ॥ ६८२ ॥

यन्त्रमुक्तायुधाः केचित् केचिन्मुक्तायुधास्तथा ।
अमुक्तायुधहस्ताश्च मुक्तायुधकरास्तथा ॥ ६८३ ॥

ईदृक् चतुर्बलं विद्वान् युद्धाय विजितश्रमः ।
कुर्यादतन्द्रितो राजा शत्रुसंहरणोद्यतः ॥ ६८४ ॥

इति बलाध्यायः ॥ ६ ॥

कुलीनं च सुशीलं च सुखे दुःखे च सम्मतम् ।
अमायं दृढचित्तं च धनैः प्राणैरवञ्चकम् ॥ ६८५ ॥

नीतिज्ञं शौचसम्पन्नं व्यसनेष्वपराङ्मुखम् ।
कुर्वीत नृपतिर्मित्रं धर्मार्थं सुखसिद्धये ॥ ६८६ ॥

इति सुहृदध्यायः ॥ ७ ॥

आत्मायत्तो नृपः श्रेष्ठो द्वयायत्तस्तु मध्यमः ।
कनिष्ठः सचिवायत्त इति नीतिविदो विदुः ॥ ६८७ ॥

मदधीनमिदं राज्यं राजा च वशगो मम ।
मया यत् क्रियते कार्यं तत् कार्यं केन लङ्घ्यते ? ॥ ६८८ ॥

इत्यात्मगर्वेणाध्मातः सचिवो यत्र जल्पति ।
कनिष्ठं तत्र तद् राज्यं सचिवायत्तमुच्यते ॥ ६८९ ॥

विज्ञप्तं यन्मया कार्यमवश्यं मन्यते प्रभुः ।
इत्यारोप्य द्वयोः साम्यं सचिवो यत् तु भाषते । ६९० ॥

सुखासुखप्रदं चैवमुभयाधीनसिद्धिनः ।
तद्राज्यमुभयायत्तं मध्यमं परिकीर्तितम् ॥ ६९१ ॥

प्रभोराज्ञां विना नाहं समर्थः कार्यसिद्धये ।
इति भीत्या नृपे भक्त्या सचिवो यत्र वक्त्यलम् ॥ ६९२ ॥

यत् तु राज्यं भयापेतं सुखदं सर्वसिद्धिदम् ।
श्रेष्ठं स्थिरतरं सम्यगात्मायत्तं प्रकीर्तितम् ॥ ६९३ ॥

अनुग्रहे निग्रहे च दाने चादानकर्मणि ।
प्रवृत्तौ च निवृत्तौ च ग्रहणे मोक्षणे तथा ॥ ६९४ ॥

स्वयं समर्थो यो राजा स्वाज्ञा चैव निरर्गला ।
निजशक्त्या समायुक्तः स प्रभुः प्रभुरुच्यते ॥ ६९५ ॥

रिपूणां निग्रहोपायमर्थानामर्जनोद्यमम्।
भृत्यानां भरणं चैव प्रत्यूहानां प्रतिक्रियाम्॥ ७०७॥

सन्माननं च मित्राणां पुत्राणां नयशिक्षणम्।
शुद्धान्तवनितारक्षां शिक्षां च गजवाजिनाम्॥ ७०८॥

मन्त्रिणां मन्त्रितं दुष्टममात्यानां विचेष्टितम्।
रक्षणं च कुमाराणां सामन्तानां च शातनम्॥ ७०९॥

रागापरागौ लोकानामात्मनश्च गुणागुणौ।
आय-व्ययं च वित्तानां कोशस्यापि विवर्धनम्॥ ७१०॥

दुष्टानां दमनं चैव शिष्टानां परिपालनम्।
पूजनं सुर-विप्राणां वर्णाश्रमनिरीक्षणम्॥ ७११॥

दुर्गाणां रक्षणं सम्यक् परभूपालचेष्टितम्।
मारणं तस्करादीनामात्मरक्षा¹विधिक्रमम्॥ ७१२॥

प्रकृतीनां च सद्भावं धान्यादीनां समर्घताम्।
शान्तिकं पौष्टिकं कर्म नित्यं नैमित्तिकं तथा॥ ७१३॥

माननं बुद्धिवृद्धानां देशकालविमर्शनम्।
चिन्तयेन्मन्त्रिभिः सार्द्धं स्वयं वा वसुधाधिपः॥ ७१४॥

आहूय मन्त्रिणः सर्वान् मन्त्रयेत पृथक् पृथक्।
अभिप्रायं विदित्वैषां गुणदोषौ विचारयेत॥ ७१५॥

मन्त्रिभिर्मन्त्रिते मन्त्रे गुणदोषौ विचार्य च।
स्वयं निश्चित्यान्यतरत् कार्यं कुर्यान्महीपतिः॥ ७१६॥

किं कृतं करणीयं किं क्रियमाणं च किं मया।
किं सिद्धं किमु साध्यं मे इति चिन्त्यं मुहुर्मुहुः॥ ७१७॥

---

१ B. रक्षां।

बहुलाभं सुसाध्यं च धर्म्यं कीर्तिविवर्धनम् ।
कार्यं विचार्य कर्तव्यं भूभुजा सुखमिच्छता ॥ ७१८ ॥

समानाय-व्ययौ यत्र व्ययो यत्राधिको भवेत् ।
असाध्यं च शतोपायैः कथञ्चित् तन्न मन्त्रयेत् ॥ ७१९ ॥

अधर्म्यमयशस्यं च पश्चात्तापकरं च यत् ।
दुर्लभं क्लेशबहुलं दुरन्तं तन्न मन्त्रयेत् ॥ ७२० ॥

कामात् क्रोधात् भयादन्यल्लोभ्यमानो न मुह्यति ।
यया शक्त्या पुनः कार्य(र्ये) मन्त्रशक्तिस्तु सा स्मृता ॥ ७२१ ॥

इति मन्त्रशक्त्यध्यायः ॥ ९ ॥

भूमिं द्रव्यं गजानश्वान् रत्नानि विजयं तथा ।
प्राप्तुमुद्यतोऽरीणां विक्रमार्थविनो नृपः ॥ ७२२ ॥

प्रारब्धं यत् स्वयं कार्यं दैवात् यदि न सिध्यति ।
न सीदति च तत् कर्तुमुत्साही च पुनः पुनः ॥ ७२३ ॥

यस्य स्यादुद्यमे नित्यं चित्तमुत्साहसंयुतम् ।
उत्साहशक्तिः सा ज्ञेया नृपाणां भूतिमिच्छताम् ॥ ७२४ ॥

इत्युत्साहशक्त्यध्यायः ॥ १० ॥

नाक्रान्तिसाध्यो यः कश्चित् देशकालाद्यपेक्षया ।
तेन सार्धं प्रकुर्वीत सन्धिं नीतिविचक्षणः ॥ ७२५ ॥

सेना शक्तुं बलिष्ठं यस्तस्मादभ्यधिकेन वा ।
तत्रापि सन्धिं कुर्वीत नयशास्त्रविशारदः ॥ ७२६ ॥

बलीयसा पीड्यमानो योद्धुं तेन च न क्षमः ।
तत्रापि सन्धिं कुर्वीत मत्वा नीतिमनुत्तमाम् ॥ ७२७ ॥

सन्धिश्चतुर्विधः प्रोक्तो मैत्रः सम्बन्धजस्तथा ।

सुजनोऽयमिति ज्ञात्वा स्वयं सद्गुणवान्यदः।
करोत्यलोभतः सन्धिं मित्रसन्धिः स उच्यते ॥ ७२९ ॥

कन्यादानेन यः कुर्यात् सन्धिं कार्यवशान्नृपः।
सम्बन्धजः स विज्ञेयः सन्धिः सन्धिविचारकैः ॥ ७३० ॥

अन्योऽन्यस्योपकारार्थं यत्र सन्धीयते नृपः।
परस्परोपकाराख्यः स सन्धिः प्रोच्यते बुधैः ॥ ७३१ ॥

गजानश्वांस्तथा रत्नं सुवर्णं भूमिमेव च।
दत्त्वा यः क्रियते सन्धिरुपहारः स उच्यते ॥ ७३२ ॥

इति सन्ध्यध्यायः ॥ ११ ॥

सुयत्नेन सहायेन सामर्थ्येन बलेन च।
मन्त्रैर्हीनेन भूपालः सार्द्धं कुर्वीत विग्रहम् ॥ ७३३ ॥

कामजो लोभजश्चैव भूभवो मानसम्भवः।
अभयाख्यः समाख्यात इष्टजोऽथ मदोत्थितः ॥ ७३४ ॥

अर्थशास्त्रे परः ख्यात एकद्रव्याभिलाषुकः।
इत्यष्टौ विग्रहाः प्रोक्ता नवमो नोपलभ्यते ॥ ७३५ ॥

स्त्रीनिमित्तो हि यो जातो विग्रहः कामजः स्मृतः।
द्रव्यापहारजनितो विग्रहो लोभजस्तथा ॥ ७३६ ॥

भूम्यर्थमुत्थितो यस्तु विग्रहो भूभवो महान्।
विरुद्धार्थं कृतो यस्तु विग्रहो मानसम्भवः ॥ ७३७ ॥

शरणागतरक्षार्थं यो भवेद् विग्रहो महान्।
अभयाख्यः स कथितो विग्रहो नीतिवेदिभिः ॥ ७३८ ॥

मित्रार्थे बन्धुभृत्यार्थे विग्रहो यः समाचरेत्।
इष्टजः स तु निर्दिष्टो नीतिस्पष्टार्थदर्शिभिः ॥ ७३९ ॥

मदिरामदजातेन विद्याधनमदेन च ।
यौवनेन मदेनाथ विग्रहो यो भवेन्नृणाम् ॥ ७४० ॥

एतैर्मदैः समुत्पन्नो मतिभ्रंशकरो महान् ।
अविवेकाद् य उत्पन्नः स भवेच्च मदास्थितः ॥ ७४१ ॥

एकमर्थं समुद्दिश्य यो भवेद् विग्रहो मिथः ।
स प्रोक्तः शास्त्रतत्त्वज्ञैरेकद्रव्याभिकाङ्क्षकः ॥ ७४२ ॥

इति विग्रहाध्यायः ॥ १२ ॥

दैवोपहतकोशश्च व्याधिना बाधितोऽपि वा ।
व्यसनासक्तचित्तो वा शत्रुणा पीडितोऽपि वा ॥ ७४३ ॥

बलकोशविहीनो वा यो वा मित्रैर्वियोजितः ।
तस्योपरि नृपो यायाज्जिगीषुर्जयसिद्धये ॥ ७४४ ॥

शरत्काले वसन्ते वा रिपोर्नाशमुपस्थिते ।
निमित्तं शकुनं ज्ञात्वा यात्रां कुर्वीत भूपतिः ॥ ७४५ ॥

सन्धानजा पार्ष्णिरोधा मित्रविग्रहणी तथा ।
द्वन्द्वनिर्यासना तुल्या समर्था चापि कीर्तिता ॥ ७४६ ॥

पार्ष्णिग्राहेण सन्धाय पश्चात् कुर्वीत भूपतिः ।
सन्धानयात्रा सा ज्ञेया नृपाणां क्षेमकारिणी ॥ ७४७ ॥

पार्ष्णिग्राहस्य रोधार्थं नियोज्य बाह्यबलं महत् ।
गच्छतो सा भवेद् यात्रा पार्ष्णिरोधा शुभावहा ॥ ७४८ ॥

शत्रोः सार्धं स्वमित्रेण कारयित्वा सुविग्रहम् ।
गच्छतो सा भवेद् यात्रा मित्रविग्रहणी परा ॥ ७४९ ॥

यस्योपरि स्वयं यायादानयेत् तदरिं ततः ।
सा यात्रा [illegible] द्वन्द्वनिर्यासकारिणी ॥ ७५० ॥

सर्वतः स्वस्थचित्तस्य बलिष्ठस्यारिघातिनः ।
भवेद् या नृपतेर्यात्रा निर्व्याजा सा प्रकीर्तिता ॥ ७५१ ॥

रिपुवंश्येन सार्द्धं यो गच्छत्यरिविनाशने ।
सा तु यात्रा भवेत् कुल्या द्विषतां भयकारिणी ॥ ७५२ ॥

रिपोर्विनाशमुद्दिश्य त्यक्त्वा चान्यप्रमादकम् ।
सहसा क्रियते यात्रा सा भवेच्छीघ्रगा भृशम् ॥ ७५३ ॥

इति यात्राभेदाः ॥

देशं कालं तथा मित्रं निमित्तं बलमात्मनः ।
विचार्य कुर्वतां नित्यं यात्रा भवति सिद्धिदा ॥ ७५४ ॥

मूलेऽर्के श्रवणे सौम्ये भौमाहिर्बुध्न्यदैवते ।
कृत्तिकायां बुधो युक्तो वाक्पतिस्तु पुनर्वसौ ॥ ७५५ ॥

भाग्ये शुक्रः शनिः स्वातौ निघ्नन्तः सर्वसिद्धिदाः ।
तस्मादेते समाख्याताः सिद्धियोगा मनीषिभिः ॥ ७५६ ॥

सहस्रकिरणो हस्ते मृगाङ्को मृगशीर्षके ।
अश्विन्यां च धरापुत्रे मैत्रे चन्द्रमसः सुतः ॥ ७५७ ॥

दिवौकसां गुरुः पुष्ये रेवत्यां भृगुनन्दनः ।
रोहिण्यां शनिवारे तु सुधायोगाः प्रकीर्तिताः ॥ ७५८ ॥

रिक्तासु सूर्यजे सूर्ये नन्दासु भृगुनन्दने ।
जयासु धरणीपुत्रे भद्रासु च बुधे विधौ ॥ ७५९ ॥

पूर्णासु त्रिदशाचार्ये स्थिते सिद्धा तिथिर्भवेत् ।
सर्वकार्यकरी नृणां यात्रायां च विशेषतः ॥ ७६० ॥

प्रतिपद् गमने शस्ता द्वितीया क्षेमदा भवेत् ।
तृतीया धनलाभाय चतुर्थी निन्दिता सदा ॥ ७६१ ॥

पञ्चमी श्रीकरी ज्ञेया षष्ठी यानेऽतिकुत्सिता।
सप्तमी सर्वलाभाय कुत्सिता चाष्टमी तिथिः ॥ ७६२ ॥

नवमी च सदा निन्द्या भूमिदा दशमी भवेत्।
वैष्णवी जयदा नित्यं द्वादशी परिवर्जिता ॥ ७६३ ॥

किं पुनर्बहुनोक्तेन सर्वसिद्ध्यै त्रयोदशी।
असिते च सिते पक्षे वर्जनीया चतुर्दशी ॥ ७६४ ॥

पूर्वभागं परित्यज्य पूर्णिमा गमने वरा।
अमावास्या विशेषेण शशिहीना विवर्जिता ॥ ७६५ ॥

उत्तरात्रितयं पुष्यो रविवारे शुभप्रदः।
रोहिणी श्रवणं चित्रा सोमवारे सुखावहा ॥ ७६६ ॥

अहिर्बुध्न्यं च पौष्णं च भौमवारे प्रशस्यते।
पुनर्वसुर्गुरोर्वारे भाग्यं च श्रवणे स्थिते ॥ ७६७ ॥

हरिदैवं द्विदैवं च वह्निदैवं शनेर्दिने।
धिष्ण्यान्येतानि शस्तानि वारेष्वेतेषु सर्वदा ॥ ७६८ ॥

हस्तः पुनर्वसुः पुष्यो रेवती मृगशीर्षकम्।
अनुराधाश्विनी श्रोत्रं शस्तानि गमने नृणाम् ॥ ७६९ ॥

चरलग्ने प्रयातव्यं द्विस्वभावेऽथवा नृपैः।
लग्ने स्थिरे न गन्तव्यं यात्रायां क्षेममिच्छुभिः ॥ ७७० ॥

अष्टमं जन्मतस्त्यक्त्वा लग्नं द्वादशमेव च।
ग्रहाणां च बलं प्राप्य गच्छेद्विजयन् जयं नृपः ॥ ७७१ ॥

गुरुर्लग्ने बुधस्तुर्ये पञ्चमे भृगुनन्दनः।
षष्ठे कुजार्कतनयौ तृतीये चण्डदीधितिः ॥ ७७२ ॥

चन्द्रमा दशमो यस्य स यात्रायां जयी भवेत्।
क्षेमेण गमनं तस्य क्षेमेण च निवर्तते ॥ ७७३ ॥

बुधजीवसितानां च यदि केन्द्रत्रिकोणगः ।
एको भवेद् ग्रहो यस्य तस्य यात्रा सुखप्रदा ॥ ७७४ ॥

द्वौ चेत् केन्द्रत्रिकोणस्थावतियोगः स कथ्यते ।
तत्र यात्रा नरेन्द्राणां क्षेमदा रिपुनाशिनी ॥ ७७५ ॥

योगाधियोगः कथितः त्रिभिः केन्द्रत्रिकोणगैः ।
तत्र यातुर्भवेत् क्षेमो ध्रुवो लाभो रिपोर्वधः ॥ ७७६ ॥

केन्द्रत्रिकोणगाः सौम्याः पापाः षष्ठ-त्रि-लाभगाः ।
ग्रहा यस्य प्रयाणे स्युस्तस्य लाभो जयो भवेत् ॥ ७७७ ॥

योगयात्रा भवेच्छस्ता नृपाणां भूतिमिच्छताम् ।
तारागुणे द्विजातीनामन्येषां शकुनादिभिः ॥ ७७८ ॥

उत्तरासु विशाखायां रोहिण्यां गमने नृपः ।
दिवसस्य तृतीयांशमाद्यभागं विवर्जयेत् ॥ ७७९ ॥

सार्प-राक्षस-रौद्रेषु ज्येष्ठायां वासरस्य हि ।
वर्जयेन्मध्यमं भागं यात्रायां पृथिवीपतिः ॥ ७८० ॥

स्वात्यश्वि-पुष्य-हस्तेषु यात्रायां परिवर्जयेत् ।
दिनस्य पश्चिमं भागं जयमिच्छन् महीपतिः ॥ ७८१ ॥

मैत्रेन्द्र-त्वाष्ट्र-पौष्णेषु त्याज्यो यत्नान्महीभुजा ।
रजन्याः प्रथमो भागः सदा विजयमिच्छता ॥ ७८२ ॥

याम्ये पूर्वात्रये मैत्रे निशामध्यं परित्यजेत् ।
गमने भूपतिर्दक्षो रिपुघाती जयोन्मुखः ॥ ७८३ ॥

श्रवणादित्रये त्याज्यो नक्षत्रे दितिदैवते ।
निशायाश्चरमो भागः प्रयाणे पृथिवीभुजा ॥ ७८४ ॥

श्रवणे च तथा हस्ते पुष्ये च मृगमस्तके ।
सर्वदा गमनं शस्तं नृपाणां सिद्धिमिच्छताम् ॥ ७८५ ॥

मैत्राश्वि-पुष्य-हस्ताश्च सर्वदिक्षु शुभावहाः ।
यात्रायां सुप्रशस्तास्ते सर्वद्वारिकसंज्ञिताः ॥ ७८६ ॥

गच्छेत् प्राचीमुदीचीं च कृत्तिकादिषु सप्तसु ।
मघादिसप्तके गच्छेद् दक्षिणां पश्चिमां दिशम् ॥ ७८७ ॥

मैत्रादिसप्तके यायात् पश्चिमां दक्षिणां दिशम् ।
धनिष्ठादिषु धिष्ण्येषु व्रजेद् यक्षेन्द्रयोर्दिशोः ॥ ७८८ ॥

वैपरीत्याद् यदा गच्छेत् परिघो लङ्घितो भवेत् ।
लङ्घितः परिघो हन्ति सर्वकार्याणि यायिनाम् ॥ ७८९ ॥

वायव्यामाग्नेयीमाशां समाक्रम्य स तिष्ठति ।
परिघो दण्डवत् तस्माद् यात्रायां तं विवर्जयेत् ॥ ७९० ॥

गमनं केचिदिच्छन्ति कृत्तिकादिषु सप्तसु ।
आग्नेयां दिशि प्राच्यां च न दोषः परिघोद्भवः ॥ ७९१ ॥

मघादिषु तथाऽऽग्नेयीं प्राचीं गच्छन् न दुष्यति ।
मैत्रादिषु दिशं वायोर्धनदस्य दिशं व्रजेत् ॥ ७९२ ॥

धनिष्ठादिषु धिष्ण्येषु वायव्यामथ वारुणीम् ।
ककुभं गच्छता नैव परिघो लङ्घितो भवेत् ॥ ७९३ ॥

ज्येष्ठा प्राचीदिशं हन्ति गच्छतां कामितं फलम् ।
पूर्वाभाद्रपदा याम्यां प्रतीचीमपि रोहिणी ॥ ७९४ ॥

उत्तराफाल्गुनी तद्वदुत्तरां ककुभं सदा ।
यातॄणां च भवेत् क्लेशः सन्देहेन निवर्तनम् ॥ ७९५ ॥

इति सर्वदिग्द्वाराणि ।

शुक्रादित्यदिने गन्ता वर्जयेत् पश्चिमां दिशम् ।
बुधे भौमे च कौबेरीं ककुभं परिवर्जयेत् ॥ ७९६ ॥

सोमे शनैश्चरे वारे दिशं प्राचीं परित्यजेत् ।
गुरोर्वारे न गन्तव्यं दक्षिणां ककुभं प्रति ॥ ७९७ ॥

वारशूलमिदं प्रोक्तमाचार्यैः कैश्चिदेव हि ।
तस्मादस्मिन् न गन्तव्यं वारशूले विचक्षणैः ॥ ७९८ ॥

इति वारशूलम् ॥

आदित्यस्य दिने वर्ज्या धनिष्ठा कृत्तिका मघा ।
अनुराधा तथाऽश्लेषा भरणी गमने बुधैः ॥ ७९९ ॥

आषाढे द्वे विशाखा च त्याज्याः सोमस्य वासरे ।
धनिष्ठाऽऽर्द्रा शतभिषग् भौमवारे विवर्जिताः ॥ ८०० ॥

कृत्तिका रेवती मूलमनुराधा तथाऽश्विनी ।
वर्ज्या शतभिषक् चैव बुधवारे शुभेच्छुभिः ॥ ८०१ ॥

मृगं शतभिषक् पौष्णं वर्जयेद् गुरुवासरे ।
पुष्याऽश्लेषामघा ब्राह्मीं याने शुक्रदिने त्यजेत् ॥ ८०२ ॥

आषाढयुगलं हस्तं चित्रामुत्तरफाल्गुनीम् ।
मन्दवारे त्यजेत् प्राज्ञो यात्रायां पार्थिवोत्तमः ॥ ८०३ ॥

इति ऋक्षदोषवारणानि ॥

बहुलासु दधि प्राश्यं ब्राह्म्यां च घृतपायसम् ।
ऐन्दवे माषवटिका रौद्रे च मधुरं दधि ॥ ८०४ ॥

पुनर्वसौ पटोलानि पुष्ये सर्पिश्च पायसम् ।
सर्पधिष्ण्ये तिला भक्ष्या मघासु कृसरोदनम् ॥ ८०५ ॥

पायसं पूर्वफाल्गुन्यामर्यम्णे शाकभोजनम् ।
यावकं पाणिनक्षत्रे चित्रायां चित्रभोजनम् ॥ ८०६ ॥

स्वात्यां धात्रीफलं खाद्यं द्विदैवे गुडभक्तकम् ।
कुलत्थान् मित्रनक्षत्रे यावकं शक्रदैवते ॥ ८०७ ॥

मूले मूलकपास्वाद्यं पूर्वाषाढे घनं दधि ।
उत्तरासां जलं शीतं श्रवणे ऽश्लक्ष्णमश्नतः ॥ ८०८ ॥

शालिभक्तं धनिष्ठायां वारुणर्क्षे च शष्कुलीः ।
पूर्वाभाद्रपदे क्षौद्रं बीजपूरं तथोत्तरे ॥ ८०९ ॥

रेवत्यां सिद्धमुद्गाः स्युरश्विन्यां स्वादु भोजनम् ।
भरण्यां सतिलं तोयं माऽस्य यात्रा सुखा भवेत् ॥ ८१० ॥

इति नक्षत्रदोहदम् ॥

पुष्पवत्यां महादेव्यामकाले वृष्टिदर्शने ।
सञ्जाते गोत्रकलहे नृपदंशमृगे तथा ॥ ८११ ॥

आशौचे गृहदाहे च भूकम्पे चण्डमारुते ।
दिग्दाहे भूमिनिर्घोषे न गन्तव्यं जिगीषुणा ॥ ८१२ ॥

श्रुते स्वयं वाऽपि परैरुक्ते क्वापि च वारिते ।
दृष्टे ज्वालां विना धूमे नृपकायस्य दर्शने ॥ ८१३ ॥

सर्पाभस्मानि तैले च परिशुष्के च गोमये ।
शवे दिगम्बरे सर्पे न गन्तव्यं सुखार्थिना ॥ ८१४ ॥

खराङ्गमहिषारूढाः संन्यासिश्रावकान्त्यजाः ।
कर्णनासादिभिर्हीना विकेशाः कृष्णवाससः ॥ ८१५ ॥

मुक्तकेशाऽतिकृष्णाङ्गा तैलाभ्यक्ता रजस्वला ।
गर्भिणी विधवोन्मत्त-क्लीबान्ध-बधिरा नराः ॥ ८१६ ॥

एतेषां दर्शने जाते न गन्तव्यं कदाचन ।
आत्मनो दौर्मनस्ये च न यात्रा सिद्धिदा भवेत् ॥ ८१७ ॥

इत्यमङ्गलानि शकुनानि ॥

पूर्णकुम्भे तथाऽऽदर्शे दध्नि मद्ये तथाऽऽमिषे ।
मीने शङ्खे ध्वजे छत्रे चामरे वारयोषिति ॥ ८१८ ॥

चाषे मृगभरद्वाजे फलपुष्पाक्षतेष्वपि ।
वृषभे समदे नागे सिते वाहे द्विजोत्तमे ॥ ८१९ ॥

सुवर्णे दिव्यरत्ने च वीणायां पटहे तथा ।
शब्दे चैव पशौ दृष्टे यात्रा भवति सिद्धिदा ॥ ८२० ॥

नृपो विप्रः सुहृद् वेश्या कुमारी पाण्डुराम्बरा ।
वृषाश्च कुञ्जरारूढा नरा नार्यः शुभावहाः ॥ ८२१ ॥

गच्छेति पृष्ठतो वाक्यमेहीति पुरतः शुभम् ।
आशिषः सर्वतः शस्ता मनसस्तुष्टिरूर्जिता ॥ ८२२ ॥

छिन्धि भिन्धि जहीत्यादि वाचो निन्द्या अपि स्फुटम् ।
उद्यतानां रिपोर्घाते पापर्द्धौ शोभनाः सदा ॥ ८२३ ॥

इति यात्रायां मङ्गलप्रदानि शकुनानि ॥

श्वा यात्रासमये गच्छेद् वामं दक्षिणतो यदि ।
स्पृशेद् वा श्रवणं वामं यात्रासिद्धिर्भवेत् तदा ॥ ८२४ ॥

प्रवेशे दक्षिणं गच्छञ्जृम्भते वा रताथतः ।
करोति नितरां सौख्यं विपरीता तु कुक्कुरी ॥ ८२५ ॥

क्रोशद्वयं यदा गच्छेत् सह पान्थेन मण्डलः ।
वामगो मूत्रयेद् वाऽपि तदाऽसौ शुभसूचकः ॥ ८२६ ॥

गजस्थानं हयस्थानं शाद्वलं शयनस्थलम् ।
उलूखल–ध्वज–छत्र–चामरं सफलद्रुमम् ॥ ८२७ ॥

इष्टिकानिचयं कुम्भं पर्याणं मृत्तिकाचयम् ।
पुष्पवत् फलवत् स्थानं श्वा गच्छन् शुभदो भवेत् ॥ ८२८ ॥

कृतमूत्रो यदा गच्छेत् पुरस्तात् सरमासुतः ।
तदाऽभिलषितं कार्यं यातुः सिध्यति निश्चितम् ॥ ८२९ ॥

वामगो मूत्रयेदार्द्रे गोमये कुक्कुरो यदि ।
मृष्टं भोजनमुद्दिष्टं शुष्के निःस्नेहभोजनम् ॥ ८३० ॥

अमेध्यमोदनं मांसं नूतनं वस्तु किञ्चन ।
मुखे निक्षिप्य गच्छन् श्वा यातुर्लाभं विनिर्दिशेत् ॥ ८३१ ॥

आर्द्रमस्थि तथा वस्त्रं पादत्राणं मुखे दधन् ।
उपस्थितः प्रभुश्चेचेत् सारमेयः सुखप्रदः ॥ ८३२ ॥

इति श्वशकुनानि ॥

शान्तदीप्तप्रभेदेन ज्ञातव्याः ककुभः क्रमात् ।
शुभाशुभफलज्ञानविचाराय मनीषिभिः ॥ ८३३ ॥

सूर्ये ज्वालाः ततो धूमः पश्चादङ्गारसम्भवः ।
ततश्च पश्चिमे भागे भस्मस्थानं प्रकीर्तितम् ॥ ८३४ ॥

भस्माङ्गारशिखाधूमं दीप्तमित्यभिधीयते ।
शेषाः शान्ता दिशः प्रोक्ताश्चतस्रः पूर्वसूरिभिः ॥ ८३५ ॥

निष्फलं भस्मनः स्थानमङ्गारस्थानमप्यानवहन् ।
ज्वाले मृत्युर्भवेद् धूमस्थाने दुःखं विनिश्चितम् ॥ ८३६ ॥

याममात्रं वसेद् भानुर्दिग्विदिक्षु प्रदक्षिणम् ।
चत्वारो दिवसे यामा यामवत्यां तथैव च ॥ ८३७ ॥

माहेन्द्यां प्रथमे यामे सूर्यो ज्वालाकुलो भवेत् ।
द्वितीये वह्निदिग्भागे तृतीये पितृदैवते ॥ ८३८ ॥

चतुर्थे नैर्ऋते स्थाने रात्रौ तिष्ठति भानुमान् ।
तृतीये धनदस्थाने प्रत्यूषे दिशि शूलिनः ॥ ८३९ ॥

शिवा रटन्ति दीप्तेषु फलमीरितमावहन् ।
शिवा शान्ते ज्वलन्तीषु शुभं शंसति निश्चितम् ॥ ८४० ॥

लाभं च विजयं सौख्यं मित्राणां च समागमम् ।
रटन्ती शान्तदिग्भागे क्रमात् फलमिदं वदेत् ॥ ८४१ ॥

अनेनैव प्रकारेण पल्लीशकुनमादिशेत् ।
दीप्तस्थाने रटन् काकः शोभनं फलमादिशेत् ॥ ८४२ ॥

दीप्ते दीप्तमुखः काकः कुर्वाणः परुषं स्वरम् ।
कार्यसिद्धिं प्रदर्श्यापि विनाशं कुरुते ध्रुवम् ॥ ८४३ ॥

दिप्ताभिमुखमारब्धः पुनः शान्तेऽभिवासते ।
कार्यं संशयितं कृत्वा पुनरन्तसिद्धिमादिशेत् ॥ ८४४ ॥

दीप्ते शान्तमुखः काकः कुर्वाणो मधुरं स्वरम् ।
ईप्सितार्थं रिपोर्नाशं लाभं स्त्रीरत्नजं दिशेत् ॥ ८४५ ॥

अन्तरिक्षेऽथ वृक्षे वा कुर्वाणो मधुरं स्वरम् ।
मूर्द्धस्थाने शुभं वक्ति सर्वदा बलिभोजनः ॥ ८४६ ॥

इति शिवा–पल्ली–काकशकुनानि ॥

पोतकीस्थानमालोक्य तोरणानि प्रकल्पयेत् ।
तोरणात् तोरणं कार्यं चत्वारिंशत्क्रमान्तरम् ॥ ८४७ ॥

पक्षद्वयस्थितौ वृक्षावष्टधन्वन्तरान्तरौ ।
शिलाशकलयुग्मं वा कल्पितं तोरणं विदुः ॥ ८४८ ॥

गृहे पिष्टमयं कृत्वा पोतकीमिथुनं सुधीः ।
पूजयेत् पुष्प–धूपाद्यैः कुमारीमपि भोजयेत् ॥ ८४९ ॥

तोरणस्थानमागम्य पोतक्यावधिवासयेत् ।
प्रयतः सन् गृहं गत्वा स्वप्यात् पाण्डविके स्मरन् ॥ ८५० ॥

सूर्योदये समुत्थाय सहायैः सहितो व्रजेत् ।
नियतस्तोरणाभ्याशं शकुनालोकतत्परः ॥ ८५१ ॥

प्रशान्तदिङ्मुखो भूत्वा पोतकीं नामभिः स्तुवन् ।
पाण्डुपुत्रस्य मध्यस्य दश नामानि कीर्तयेत् ॥ ८५२ ॥

पाण्डवी पोतकी दुर्गा श्यामोमा चटकाभिधा ।
वाराही शकुनी कृष्णा श्वेतपक्षेति नामभिः ॥ ८५३ ॥

एतैरावाह्य विकिरेदक्षतान् कुसुमैः समम् ।
ध्यायेच्च फाल्गुनं वीरं सर्वयोधपुरन्धरम् ॥ ८५४ ॥

किरीटी विजयः कृष्णो बीभत्सुः फाल्गुनोऽर्जुनः ।
सव्यसाची च पार्थश्च श्वेताश्वोऽथ धनञ्जयः ॥ ८५५ ॥

" ॐ शिवे ज्वालामुखि बलिं गृहाण स्वाहा ॥ ॐ शिवे शिवदूति भगवति चण्डे इदमर्घ्यं मया लीलया समर्पितं गृहाण गृहाण ॥ आगच्छ वायुवेगेन शुभं कुरु कुरु स्वाहा ॥ "

अनेन मन्त्रेण त्रिपथे चतुष्पथे वा शिवायै बलिमर्घ्यं दद्यात् । तोरणेषु नामान्येतानि कीर्तयेत् ।

सिद्धिदा जायते देवी पाण्डुपुत्रोपकारिणी ॥ ८५७ ॥

निःशब्दा हीनशब्दा वा गच्छतो यदि दक्षिणम् ।
व्रजेत् कृष्णा तदा ग्रस्ता शकुनज्ञस्य तोरणे ॥ ८५८ ॥

तोरणान्तनिवृत्तस्य पोतकी वामगा शुभा ।
अग्रे दक्षिणतः कृष्णा वामतः शुकपः शुरः ॥ ८५९ ॥

एका ताराऽभयं विद्याद् द्वितीया कामदा भवेत् ।
तृतीया राज्यलाभाय व्रजन्ती दक्षिणां दिशम् ॥ ८६० ॥

प्रथमं वामगा भूत्वा दक्षिणं यदि गच्छति ।
विनाश्य कुरुते कार्यं पश्चात् कृष्णा न संशयः ॥ ८६१ ॥

विपरीतक्रमे सैषा विपरीतफलप्रदा ।
न या नयक्रमाद् यान्ती मिश्रकार्याणि शंसति ॥ ८६२ ॥

शुभं वाप्यशुभं मान्ते तदेव फलदायकम् ।
पोतकीशकुनज्ञानं कीर्तितं सोमभूभुजा ॥ ८६३ ॥

इति पोतकीशकुनम् ॥

फल-पुष्प-पलाशाढ्यं क्षीरिणं वा महीरुहम् ।
पवित्रस्थानसंयुक्तं पिङ्गलायुगलान्वितम् ॥ ८६४ ॥

अर्चयेदधिवासार्थं सायङ्काले समाहितः ।
स्नात्वा शुक्लाम्बरो भूत्वा सहायसहितो बुधः ॥ ८६५ ॥

नवेन गोमयेनोर्वीं लिप्त्वा गोचर्मनिर्मिताम् ।
अष्टपत्रं लिखेत् पद्मं पिष्टेनार्द्रेण कोविदः ॥ ८६६ ॥

कृत्वा पिष्टमयं तत्र पिङ्गलायुगलं शुभम् ।
चण्डीं च स्थापयेत् तत्र क्लिष्टां (क्लृप्तां) पिष्टेन सायुधाम् ॥८६७॥

लोकपालाष्टकं तत्र ध्यायेत् पद्मदलाष्टके ।
ब्रह्माणं कमलस्योर्ध्वमच्युतं च तलस्थितम् ॥ ८६८ ॥

तत्तन्नामाक्षरैर्मन्त्रैः प्रणवाद्यैर्नमोऽन्तगैः ।
पूजयेत् फल-पुष्पाद्यैर्धूप-नैवेद्य-दीपकैः ॥ ८६९ ॥

वृक्षस्थानाय नमः इत्यासनमन्त्रः । ॐ ह्रीं श्रीं चामुण्डे हुं नमोऽस्मिन वृक्षे अवतर स्वाहा ।

ध्यायन्ननेन मन्त्रेण चण्डीं वृक्षेऽवतारयेत् ।
पिङ्गलायुगलस्यापि मन्त्रोऽयं कथ्यतेऽधुना ॥ ८७० ॥

ॐ पिङ्गले मेखले रेवति रात्रिचारिणि ब्रह्मपुत्रि सत्यमेतत् ब्रूहि मे स्वाहा । इत्यावाहनमन्त्रः । ॐ श्रीं ह्रीं हूं चलि वौषट् इति मूलमन्त्रः । ॐ सिद्धचामुण्डे कृष्णपिङ्गले स्वाहा । ॐ नमो भगवति कालरात्रि मन्त्रमूर्ति महेश्वरि चामुण्डे प्रजापालनि योगेश्वरि आगच्छ आगच्छ एह्येहि तिष्ठ तिष्ठ ॐ ह्रीं चिलि चिलि रुद्राय स्वाहा । इत्यधिवासनमन्त्रः ॥

---

१ BC वृषमस्या । २ CE प्रं चा । ३ CE ॐ ह्रीं ह्रीं हूं चलि चलि वौषट् ।

पूजां जपं च होमं च मूलमन्त्रेण कल्पयेत् ।
अष्टोत्तरशतं जप्त्वा दशांशं होममाचरेत् ॥ ८७१ ॥

अश्वत्थोदुम्बराम्राणां दूर्वाग्रसमहीरुहः ।
समिधो मधु-सर्पिर्भ्यां जुहुयाच्चण्डिकां स्मरन् ॥ ८७२ ॥

प्रेतासनगतां शुष्कां भस्मकिप्तां कपालिनीम् ।
घूकध्वजां शूलहस्तां रक्तपां कृष्णवाकिनीम् ॥ ८७३ ॥

वसामृग्रचितां कृष्णां गजसिंहाजिनाम्बराम् ।
असमृगस्थितां भीमां स्मरेच्चण्डीं कृतार्चनः ॥ ८७४ ॥

अर्चयित्वा ततो मूलं वेष्टयेत् सितकन्तुभिः ।
अर्पयेद् गुरवे सर्वं होमार्चनजपादिकम् ॥ ८७५ ॥

देव्यै कार्यं निवेद्याथ गृहं गच्छेन्निशामुखे ।
गृहे च भोजयेत् कन्याः स्वयं भुञ्जीत कन्दुभिः ॥ ८७६ ॥

प्रत्यूषेऽथ समुत्थाय कृतदेवार्चनादिकः ।
गत्वाऽधिवासितं स्थानं जानुभ्यां धरणीगतः ॥ ८७७ ॥

बद्धाञ्जलिपुटो भूत्वा मन्त्रमाद्यमुदीरयेत् ।
कथयेदुच्चया वाचा कार्यं शपथपूर्वकम् ॥ ८७८ ॥

तथ्यं कथय देवि ! त्वं ब्रह्मपुत्रि ! शुभाशुभम् ।
इत्युक्त्वा पृष्ठतः कन्या मर्दितां कङ्कुमं बुधः ॥ ८७९ ॥

शृणुयाद् विरुतं तस्या स्वथा वीक्षेत चेष्टितम् ।
एकाग्रमानसो भूत्वा शकुनालोकनोद्यतः ॥ ८८० ॥

पार्थिवो वाडिवस्त्वाप्यः कैकरस्तैजसः पुनः ।
कुंकुली सर्वारोत्थो वायुः किशुरिवाम्बरः ॥ ८८१ ॥

एते पञ्च स्वराः ख्याताः पिङ्गलाख्यस्य पक्षिणः ।
तेषां मात्राप्रभेदाऽयं बहुधा स्वरभेदतः ॥ ८८२ ॥

---

१ D शुक्लमसदाहस्तां रक्ताननम् । २ D कुर्याद् दीप्ताशां चतुरो बुधः ॥ ३ D वाप्य । ४ कुरु ।

एकमात्रचिकित्युक्तः तद्द्वयेन द्विमात्रिकः ।
त्रितयेन त्रिमात्रः स्याच्चतुर्मात्रश्चतुष्ककः ॥ ८८३ ॥

पञ्चभिः पञ्चमात्रस्तु बोद्धव्योऽसौ मनीषिभिः ।
स्वरूपं तस्य वक्ष्यामि स्वराणामनुकारतः ॥ ८८४ ॥

चिक् एकमात्रः १ । चिकि द्विमात्रः २ । चिकिकि त्रिमात्रः ३ । चिकिचिकि चतुर्मात्रः ४ । चिकिचिकिकि पञ्चमात्रः ५ पार्थिवः ॥ किच् १ । किचि २ । किचिचि ३ । किचि किचि ४ । किचि किचिचि ५ आप्यः ॥ कुग् १ । कुरु २ । कुरुरु ३ । कुरुकुरु ४ । कुरुकुरुरु ५ तैजसः । चीच् १ । चीचु २ । चीचुचु ३ । चीचुचीचु ४ । चीचुचीचुचु ५ वायुः ॥ मृक् १ । चिच २ । कुरुरु ३ । कीः कीरव ४ । कुरुकुरु कुरु ५ आकाशः ॥

पार्थिवादिक्रमेणोक्ताः पञ्च मात्राः पृथग्विधाः ।
तेषां विरक्तो यः कश्चित् स लघुः स्वर इष्यते ॥ ८८५ ॥

षोडोदितो गुरुः प्रोक्तो नवप्रोक्तः प्लुतो भवेत् ।
लघौ स्वल्पं गुरौ मध्यं प्लुते पुष्टं फलं भवेत् ॥ ८८६ ॥

पार्थिवं कुरुते हृष्टः संतापी जलजं स्वरम् ।
तैजसं मदनाक्रान्त इति शान्तास्त्रयः स्वराः ॥ ८८७ ॥

वायव्यं कुरुते क्रुद्धः शोकार्तो नाभसं स्वरम् ।
स्वराविमौ प्रदीप्ताख्यौ विबुधैः परिकीर्तितौ ॥ ८८८ ॥

पूर्वदक्षिणदिग्भागे पार्थिवः प्रबलः स्वरः ।
पश्चिमायां च कौबेर्यां बलवान् जलजः स्वरः ॥ ८८९ ॥

वायव्ये तैजसे कोणे बलिष्ठस्तैजसः स्वरः ।
ऐशाने नैर्ऋते कोणे बलीयान् नाभसः स्वरः ॥ ८९० ॥

आप्य-पार्थिवयोर्मैत्री तयोराप्यो बलाधिकः ।
आप्य-तैजसयोर्वैरं तयोराप्यो महाबलः ॥ ८९१ ॥

आप्य-मारुतयोर्वैरं बलवान् मारुतस्तयोः ।
मध्यस्थावाम्बराग्नेयौ नाभसस्तु तयोर्बली ॥ ८९२ ॥

नैव शत्रू न मित्रे च नाभसाप्यौ परस्परम् ।
तथापि नाभसो नादः प्रबलः परिकीर्तितः ॥ ८९३ ॥

पार्थिवाग्नेययोर्मैत्री तत्र भौमो बली स्वरः ।
अनलानिलयोर्मैत्री बलवाननिलस्तयोः ॥ ८९४ ॥

जलमारुतजौ शब्दौ प्रागुक्तौ भौमवैरिणौ ।
तावेव पश्चादुद्भूतौ मित्रे भौमस्य कीर्तितौ ॥ ८९५ ॥

चतुर्णामपि शब्दानां नाभसः शत्रुरिष्यते ।
एवं स्वराणामुदितं मित्रामित्रबलाबलम् ॥ ८९६ ॥

स्वस्यां दिशि फलं पूर्णं तदर्धं मित्रसद्मनि ।
शत्रुक्षेत्रे फलाभावो विपरीतमथापि वा ॥ ८९७ ॥

भौमादनन्तरश्चाप्यः सर्वसिद्धिप्रदो भवेत् ।
विपरीतक्रमेणैव फलनाशकरौ स्वरौ ॥ ८९८ ॥

प्रथमं पार्थिवो नादस्तैजसस्तदनन्तरम् ।
वाञ्छितार्थप्रदौ स्यातां विपरीतौ ततोऽन्यथा ॥ ८९९ ॥

आदौ चेत् पार्थिवो नादः पश्चान्मारुतजो यदि ।
लाभपूर्वा तदा हानिर्हानिर्लाभो विपर्ययात् ॥ ९०० ॥

प्रथमो भूमिजो नादो द्वितीयो नाभसो यदि ।
सुखपूर्वं भवेद् दुःखं दुःखात् सौख्यं विपर्ययात् ॥ ९०१ ॥

आप्यस्य पश्चादाग्नेयः फलं कृत्वा विनाशयेत् ।
व्यत्यासेन समुद्भूतौ व्यत्यस्तफलकारिणौ ॥ ९०२ ॥

प्रथमो जलजः शब्दस्ततश्चेद् वायुसम्भवः ।
भयं वित्तविनाशाय वैपरीत्येऽपि तादृशौ ॥ ९०३ ॥

जलजाद् व्योमजः पश्चान्मित्रयुद्धाद् भयेन्मृतिः ।
विपरीतक्रमोऽत्रौ श्रुतौ मृतिसूचकौ ॥ ९०४ ॥

आग्नेय-मारुतौ शब्दौ क्रमाज्जातौ धनापहौ ।
मृतिसंसूचकौ ज्ञेयौ विपरीतक्रमोदितौ ॥ ९०५ ॥

क्रमेण व्युत्क्रमेणापि नादौ तैजस-नाभसौ ।
कुरुतः कलहं चोग्रं भयं च सुमहत्तरम् ॥ ९०६ ॥

व्यत्यासात् क्रमशो वाऽपि शब्दौ वायव्य-नाभसौ ।
विघ्नमात्रं रणे मृत्युं नरस्य कुरुते ध्रुवम् ॥ ९०७ ॥

अन्यैरभिहितो भौमः कार्यसिद्धिविघातकृत् ।
अधिकः पार्थिवो नादः सर्वकार्यफलप्रदः ॥ ९०८ ॥

त्रयाणां वा चतुर्णां वा पञ्चानां श्रवणे सति ।
पश्चाच्छ्रुतोऽधिको वाऽपि पार्थिवो ध्वनिरुत्तमः ॥ ९०९ ॥

पार्थिवं सलिलं नादं स्वस्थानादूर्ध्वगस्तरोः ।
कुर्वन् लाभं सुखं कीर्तिं जयं शंसति पिङ्गलः ॥ ९१० ॥

अवतीर्य निजस्थानात् कुर्वन् नादौ शुभावहौ ।
कनिष्ठं फलमाचष्टे क्लेशाल्लाभं विहङ्गमः ॥ ९११ ॥

वृक्षस्याग्रे रवं कुर्वन् पार्थिवं वारिजं खगः ।
पुष्कलं फलमाख्याति मध्ये मध्यमशो लघु ॥ ९१२ ॥

विन्यस्य वदने भक्ष्यं भुक्त्वा वा तद् विहङ्गमः ।
रम्यस्थानस्थितः कुर्वन् शुभौ नादौ शुभं दिशेत् ॥ ९१३ ॥

भक्ष्यमुत्सृज्य वक्त्रस्थं यदा वक्ति शुभौ ध्वनी ।
तदा शंसति सम्पत्तेर्हानिं पिङ्गविहङ्गमः ॥ ९१४ ॥

---

१ D अतुलं च सुखं ।

अर्चितं पादपं त्यक्त्वा पादपान्तरमाश्रितः ।
रचयन् शोभनं शब्दं दिशेद् देशान्तरे सुखम् ॥ ९१५ ॥

अम्बरे शुष्कवृक्षे वा भग्नशाखे च कोटरे ।
कुर्वन् नादं शुभं पिङ्गो भयमुग्रं प्रशंसति ॥ ९१६ ॥

शुभस्थानस्थितो वापि गत्वा वाऽथ प्रदक्षिणम् ।
कुर्वन् शान्ते शुभादन्यनादं शंसत्यशोभनम् ॥ ९१७ ॥

वामतः शान्तदिग्वर्ती कुर्वाणः शोभनं ध्वनिम् ।
शोभनं फलमावहेत् चिरकालेन पिङ्गलः ॥ ९१८ ॥

भौमाप्यतैजसैर्नादैर्जल्पन्ती शुभदेशगा ।
पिङ्गला प्रीतिमावहेत् सुखं लाभं जयं यशः ॥ ९१९ ॥

इति पिङ्गलाशकुनम् ॥

अर्चयित्वा गणाधीशं सर्वविघ्नविनाशनम् ।
कुमार्यो महिला नार्यस्तिस्रः शुभे जनेऽखिले ॥ ९२०

अक्षतैः पूरयेयुस्ता यत्र किञ्चित् कुडवादिकम् ।
चण्डिकायै नमः कृत्वा सप्तकृत्वोऽभिमन्त्रितम् ॥ ९२१ ॥

सम्मार्जनीकृतावेष्टं स्थापयेयुर्गणाधिपम् ।
व्रजेयुस्तं समादाय रजकस्य निकेतनम् ॥ ९२२ ॥

तद्गेहस्य पुरोभागे निक्षिपेयुः सिताक्षतान् ।
मनोगतं समुद्दिश्य शृणुयुः सुसमाहिताः ॥ ९२३ ॥

श्रूयते वचनं किञ्चित् रजकालयमध्यगम् ।
नार्या नरेण बालेन प्रोक्तमन्येन केनचित् ॥ ९२४ ॥

स्वैरसंलापनोद्भूतं शुभं वा यदि वाऽशुभम् ।
शृण्वन्तीभिः फलं ज्ञेयं तद्वाक्यार्थविचारतः ॥ ९२५ ॥

---

१ C शब्दः । २ B °विराणी ।

चण्डालनिलयेऽप्येवं श्रवणे शोधने क्रमः ।
यद् भूयुर्वचनं तत्र तत् तथा न तदन्यथा ॥ ९२६ ॥

शाकुनं शास्त्रमालोक्य भाविकार्यनिबोधकम् ।
शकुनं वर्णितं सम्यक् सोमेश्वरमहीभुजा ॥ ९२७ ॥

इत्युपश्रुतिशकुनम् ॥ इति यात्राध्यायः ॥ १३ ॥

अवृष्ट्या तोयरहिते दुर्भिक्षे मरकान्विते ।
परेषां दुःस्थिते देशे नैव यायात् कथञ्चन ॥ ९२८ ॥

परस्परविरोधेन क्षीयमाणेषु शत्रुषु ।
तद्विनाशो भवेद् यावत् तावत् तिष्ठेत् बुद्धिमान् ॥ ९२९ ॥

स्वस्थासनमुपेक्षाख्यं मार्गरोधासनं तथा ।
दुर्गसाध्यासनं चैव शत्रूर्ग्रीकरणासनम् ॥ ९३० ॥

रमणीयासनं चान्यत् तथा च निकटासनम् ।
दूरमार्गासनं चैव प्रलोभाख्यं तथैव च ॥ ९३१ ॥

पराधीनासनं चैतद् दशमं परिकीर्तितम् ।
इतोऽधिकं न दृश्येत नीतिज्ञैरन्यदासनम् ॥ ९३२ ॥

निष्कण्टके तथा राज्ये संहते वैरिमण्डले ।
स्वस्थाने या स्थितो राज्ञां स्वस्थासनमिति स्मृतम् ॥ ९३३ ॥

यदस्माभिरनुष्ठेयं दैवेन क्रियते हि तत् ।
उग्रदण्डप्रयोगाच्च व्यसनाद् नृपदर्शनात् ॥ ९३४ ॥

दुर्भिक्षान्मरकापातात् विनाशं यास्यति ध्रुवम् ।
इत्युपेक्ष्य नृपस्थानमुपेक्ष्यासनमुच्यते ॥ ९३५ ॥

नद्याः पूर्णप्रवाहेण गमनं रोधितं यदि ।
तेन दोषेण यत् स्थानं मार्गरोधासनं स्मृतम् ॥ ९३६ ॥

१ ABCE तिष्ठेत । २ D °धास ।

दुर्गं ग्रहीतुमुद्युक्तो वारयन् यवसादिकम् ।
तदुपान्ते वसेद् यस्तु दुर्गमाश्यासनं हि तत् ॥ १३७ ॥

बलादुपार्जिते राष्ट्रे वेशार्थं यत्र तिष्ठति ।
तत् स्थानं कथितं राज्ञां राष्ट्रीकरणासनम् ॥ १३८ ॥

विजिगीषुर्नृपो गत्वा रिपुं हत्वा रणाङ्गणे ।
रम्यां वसतिमालोक्य यत्र तिष्ठति सानुगः ॥ १३९ ॥

यवसेन्धनभूयिष्ठे जलधान्यसमन्विते ।
तत् स्थानं नीतिनिष्णातै रमणीयासनं स्मृतम् ॥ १४० ॥

दूरस्थस्य रिपो राज्ञा विनाशाय समुद्यतः ।
समीपे यत् स्थितिं कुर्यात् तत् परसन्निकटासनम् ॥ १४१ ॥

दूरदेशं नृपो गत्वा कृत्वा कार्यमशेषतः ।
विहाय स्वपुरं दूरं यत्र तिष्ठत्यनाकुलम् ॥ १४२ ॥

वर्षर्तुव्यत्ययो यावत्तावत्कालस्य सम्भवः ।
तावद् यदुचितं स्थानं दूरयानासनं हि तत् ॥ १४३ ॥

हस्त्यश्व-धन-रत्नानि दुर्गं राष्ट्रं तथैव च ।
किञ्चित्कालं स्थितिः कार्या रिपुं हत्वा हृतानि ते ॥ १४४ ॥

इति सन्धाभिलाषेण यत्र तिष्ठति भूमिपः ।
तत् सन्ध्यासनं नाम कथितं नीतिवेदिभिः ॥ १४५ ॥

मासे पक्षे दशाहे वा षडहे पञ्चरात्रके ।
प्राभृतं ते ददातीति भेदोऽस्य स्थापयेन्नृप ॥ १४६ ॥

आज्ञया धार्यमाणस्तु यत्र तिष्ठति यच्चिरम् ।
सन्धासनमेवं वा तदाख्यातं मनीषिभिः ॥ १४७ ॥

---

१ A वासार्थं ॥ २ B प्रभूतं तु मनीषिभिः ॥

स्नेहाद् वा वैरिभावाद् वा गन्तुं देशं स्वकं न यः ।
लभते तस्य तत् स्थानं पराधीनासनं स्मृतम् ॥ ९४८ ॥

इत्यासनाध्यायः ॥ १४ ॥

स्वयं हीनबलो राजा जयहेतुं न पश्यति ।
बलिना पीड्यमानो यः क्षेमस्थानं समाश्रयेत् ॥ ९४९ ॥

सत्संश्रयोऽन्यसंसर्गो दुर्गसंश्रयणं तथा ।
इति भेदास्त्रयः प्रोक्ताश्चतुर्थो नोपलभ्यते ॥ ९५० ॥

महता शत्रुणा यस्तु पीडितोऽल्पबलो नृपः ।
सत्यसन्धं परिज्ञाय तमेवाश्रयते बुधः ॥ ९५१ ॥

बहून् वा सद्गुणान् वीक्ष्य शत्रुं यस्तु समाश्रयेत् ।
तं गुणं नीतितत्त्वज्ञाः सत्संश्रयमुशन्ति हि ॥ ९५२ ॥

शत्रुणा बाध्यमानो हि स्वयं वाऽप्यनुपायकः ।
गुणहीनं रिपुं ज्ञात्वा श्रयेदन्यं गुणाधिकम् ॥ ९५३ ॥

बलिनं क्रियया युक्तं धर्मज्ञं सत्यवादिनम् ।
आश्रयेदीदृशं यस्तु सोऽन्यसंश्रय उच्यते ॥ ९५४ ॥

वैरिणा बलयुक्तेन पीडितो ह्यसमो रिपुः ।
यत् तु संश्रयते दुर्गं दुर्गसंश्रय इष्यते ॥ ९५५ ॥

इत्याश्रयाध्यायः ॥ १५ ॥

बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयेत्[१] ।
द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥ ९५६ ॥

लाभाद् वाऽपि भयाद् वाऽपि योगक्षेमार्थमुद्यतः ।
द्वयोर्मध्ये चिरं कालं द्वैधीभावेन यापयेत् ॥ ९५७ ॥

नीतिशास्त्रार्थसारज्ञैर्नामभेदार्थयत्नतः ।
मिथ्याचित्तः समादिष्टो मिथ्यावचन एव च ॥ ९५८ ॥

---

१ ABDE °र्पयेत् ।

मिथ्याकरण इत्यन्यस्तथा चोभयवेतनः ।
युग्मसाधूतकश्चेति द्वैधीभावोऽत्र पञ्चधा ॥ १५९ ॥

चित्ते विरोधमाधत्ते वचसा प्रियभाषणम् ।
द्वैधीभावोऽयमाख्यातो मिथ्याचित्तोऽर्थकोविदैः ॥ १६० ॥

वचसा प्रियमाख्याति कर्मणा वर्ततेऽन्यथा ।
द्वैधीभावोऽपरः प्रोक्तो मिथ्यावचनसंज्ञकः ॥ १६१ ॥

स्तोकं स्तोकं किमप्यादौ कार्यं विश्वासकारणात् ।
करोति भावदुष्टोऽसौ महत् कार्यं विनाशयेत् ॥ १६२ ॥

एवं यः कुरुते मिथ्या रिपोर्नाशाय पार्थिवः ।
मिथ्याकरणनामाऽसौ द्वैधीभावः प्रकीर्तितः ॥ १६३ ॥

गुप्तं वेतनमेकस्मात् तथाऽन्यस्मात् प्रकाशितम् ।
गृहीत्वा यश्चरन् मायी गुप्तं दस्युहितेच्छया ॥ १६४ ॥

अज्ञप्तितो रिपोर्मन्त्रं भित्त्वा स्वस्वामिनेऽर्पयेत् ।
यत्र तिष्ठति द्वैविध्यात् स स्यादुभयवेतनः ॥ १६५ ॥

यद्विधुं साधयस्वेति दौक्तिं साधूतं महत् ।
अन्येनापि तमुद्दिश्य दत्तं वाजि-गजादिकम् ॥ १६६ ॥

संवाहं प्रेषयिष्यामि साधयिष्यामि ते रिपुम् ।
इति ब्रुवन् विकल्पाभ्यां द्वाभ्यामर्थं समाहरेत् ॥ १६७ ॥

तयोरज्ञातरूपः सन् यत्र राजा प्रवर्तते ।
द्वैधीभावं तमस्याहुर्युग्मसाधूतकं बुधाः ॥ १६८ ॥

द्वैधीभावं समाश्रित्य य एवं वर्तते नृपः ।
विपक्षद्रव्यमादत्ते मन्त्ररक्षाविचक्षणः ॥ १६९ ॥

इति द्वैधीभावाध्यायः ॥ १० ॥

सन्धिं च विग्रहं चैव यानमासनमाश्रयम् ।
द्वैधीभावं च यो वेत्ति स योक्तुं शत्रुमण्डले ॥ १७० ॥

बलवान् कोशसम्पन्नो गुणषट्कक्रियाबुधः ।
स कृत्स्नां पृथिवीं भुङ्क्ते देशकालसहायवित् ॥ १७१ ॥

उपायेषूत्तमं साम भेदो मध्यम उच्यते ।
उपप्रदानमधमं दण्डः कष्टतमः स्मृतः ॥ १७२ ॥

अपायरहितत्वाच्च द्रव्यहानेरभावतः ।
सिद्धिमायान्ति कार्याणि ततः सामोत्तमं मतम् ॥ १७३ ॥

कुत्सिता भेदमायान्ति न ते विश्वासभूमयः ।
अतः सन्देहरूपत्वाद् भेदोऽयं मध्यमः स्मृतः ॥ १७४ ॥

वित्तस्य संक्षयः पूर्वं सिद्धिर्दैवे व्यवस्थिता ।
उपप्रदानमधमं तेन प्रोक्तं मनीषिभिः ॥ १७५ ॥

लाभार्थं क्रियते युद्धं रणे संशयितो जयः ।
राज्यं च जीवितं चैव दण्डः कष्टतमस्ततः ॥ १७६ ॥

कुपितस्य प्रियं वाक्यं कोपवृद्धो प्रजायते ।
यथाऽऽज्यस्य प्रतप्तस्य ज्वालायै जलबिन्दवः ॥ १७७ ॥

कुलीनेषु कृतज्ञेषु सार्द्रचित्तेषु साधुषु ।
कार्यार्थेषु च मेधावी पूर्वं साम प्रयोजयेत् ॥ १७८ ॥

प्रथमं कर्णसुभगं द्वितीयं दैविकं तथा ।
तृतीयं स्मारकं प्रोक्तं चतुर्थं लोभजं स्मृतम् ॥ १७९ ॥

तथैव पञ्चमं साम निजार्पणमिति स्मृतम् ।
उपायेषूत्तमं साम कथितं निरुपद्रवम् ॥ १८० ॥

मधुरैः सुखसंलापैरन्यैश्च हृदयङ्गमैः ।
एवं वचोऽर्पयेत् साम तत् कर्णसुभगं स्मृतम् ॥ १८१ ॥

विश्वासजननोपायैः शपथैर्देवपूर्वकैः ।
क्रियते यत्र नीतिज्ञैः साम तद् दैविकं विदुः ॥ ९८२ ॥

यदासीद् बान्धवं पूर्वं साम्प्रतं विस्मृतं त्वया ।
इति संस्मार्यते यत्र स्मारकं साम तत् स्मृतम् ॥ ९८३ ॥

ग्रामं पुरं तथा राष्ट्रं वाजिनं वारणं धनम् ।
दास्यामीति च यत् साम स्मृतं तदिह लोभजम् ॥ ९८४ ॥

भवत्कार्ये मदीयं स्वं शरीरं च मयार्पितम् ।
इति वागर्पिते साम्नि कथितं तत्समार्पणम् । ९८५ ॥

इति सामाध्यायः ॥ १७ ॥

सामोपायैरसाध्या ये शत्रवो मदमोहिताः ।
भेदोपायेन ते साध्या नृपेण विजिगीषुणा ॥ ९८६ ॥

क्षीरं नीरं यथा हंसो विश्लेषयति संहतम् ।
तथा सुसंहतान् शत्रून् भेदाद् विश्लेषयेत् तु तान् ॥ ९८७ ॥

शत्रुस्थैरात्मपुरुषैर्गूढैरुभयवेतनैः ।
मानापमानितान् क्रुद्धान् भेदयेच्च नृपस्तु तान् ॥ ९८८ ॥

प्राणापहो मानभङ्गो धनहानिश्च बन्धकः ।
दाराभिलाषोऽङ्गभङ्ग इति भेदोऽत्र षड्विधः ॥ ९८९ ॥

मन्त्रः सम्यग् मया ज्ञातो नृपस्त्वां हन्तुमुद्यतः ।
अद्य श्वो वाऽनिर्नाहत्यैव किञ्चिन्मायापि बुध्यसे ॥ ९९० ॥

पैशुन्येनाप्यनाख्याप्यहेतुभिः प्रत्ययात्मकैः ।
भीतिरुत्पाद्यते यत्र स भेदः प्राणहा स्मृतः ॥ ९९१ ॥

त्वद्बुद्धिप्रत्येरितो राजा तव मानं हरिष्यति ।
एवं विद्वेष्य यो भेदो मानभङ्गः स वर्णितः ॥ ९९२ ॥

---

१ ABC वापि । २ DE इति ।

धनिकोऽयं महानेव तव किञ्चिन्न दित्सति ।
केनाप्युपायेन तस्माद् धनमाहर्तुमर्हति ॥ ९९३ ॥

इति सम्मन्त्र्य भूपेन तद् ब्रूते धनिकाय च ।
अर्थलुब्धो ह्ययं राजा तव द्रव्यं हरिष्यति ॥ ९९४ ॥

यत्रैवं पिशुनत्वेन भिनत्त्युभयचेतनः ।
धनहानिस्त्वयं भेदो नीतिज्ञैः समुदाहृतः ॥ ९९५ ॥

न करोति तव स्वामी विश्वासं त्वयि कर्हिचित् ।
बन्धयित्वा तु निगडैः कारागारे निधास्यति ॥ ९९६ ॥

इति विश्वासमुत्पाद्य निजस्वामिहिते रतः ।
यद् भिनत्ति परं बुद्ध्या स भेदो बन्धकः स्मृतः ॥ ९९७ ॥

विलासी चपलो भोगी रूपवांस्तरुणो विटः ।
अन्तःपुरे मदीयां स्त्रीं कटाक्षैः स्प्रष्टुमीक्षते ॥ ९९८ ॥

वध्योऽयमिति भूपालो मया सार्द्धममन्त्रयत् ।
इति यं कुरुते भेदं स स्याद् दाराभिलाषकः ॥ ९९९ ॥

त्वज्जायां रूपसम्पन्नां नवयौवनशालिनीम् ।
ममाग्रे वर्णयन् राजा सापेक्ष इति लक्षितः ॥ १००० ॥

त्वयि जीवत्यलभ्यत्वात् तव द्रोहं विधास्यति ।
दाराभिलाषभेदोऽयमेवं वा परिकीर्त्तितः ॥ १००१ ॥

अयमस्मिन् कुले जातः कदाचिद् राज्यमिच्छति ।
अङ्गुली वा तथा नेत्रे सन्ततः साधनानि च ॥ १००२ ॥

छेत्तुं निश्चितवान् राजा सर्वथा तत् करिष्यति ।
इति यो निर्मितो भेदः सोऽङ्गभङ्गः प्रकीर्तितः ॥ १००३ ॥

मध्यगभेदेन शत्रूणां भिनत्ति प्रकृतिं तु यः ।
भेदवज्रेण तद् भिन्नं हृदयं मतिभृभृतः ॥ १००४ ॥

इति भेदाध्यायः ॥ १८ ॥

---

१ A स्पृष्टु°, BC सस्पृष्टु°, E स्पृष्टु° । २ BD °लापुकः ।

अर्थभारप्रदानेन स्वाधिकारच्युतेन च ।
अकालवेतनत्वेन द्रव्यापहरणेन च ॥ १००५ ॥

द्विषतां कारणैरेभिर्विरक्ता ये च मन्त्रिणः ।
अमात्याः सचिवाश्चैव तथा सामन्तमान्यकाः ॥ १००६ ॥

भृत्याश्च बान्धवाश्चैव ये चान्तर्वर्तिनो जनाः ।
युद्धबुद्धिसहाया ये तेषां दानं प्रयोजयेत् ॥ १००७ ॥

अन्ये ये लोभसंयुक्ता व्यसनासक्तचेतसः ।
तेभ्योऽपि दानं युञ्जीत नृपः शत्रुजिगीषया ॥ १००८ ॥

एवं राष्ट्रविहीना ये स्वकीयाः सचिवादयः ।
तेषामपि प्रयुञ्जीत दानं राज्याभिवृद्धये ॥ १००९ ॥

अर्थोत्थं हायनं देश्यं करजं दन्ति-सप्तिजम् ।
ग्रामजं शासनं भूषा वसनं प्रतिपत्तिजम् ॥ १०१० ॥

आकरं रत्नजं कन्या वैश्यं वेलाकरं तथा ।
उपप्रदानमेवं तु प्रोक्तं षोडशधा बुधैः ॥ १०११ ॥

यस्मै यद् रोचते वस्तु तस्मै योग्यानुसारतः ।
यद् दीयते तदाख्यातमर्थोत्थं दानमुत्तमम् ॥ १०१२ ॥

एकं संवत्सरं यावत् कुटुम्बभरणक्षमम् ।
यस्य यद् दीयते तस्य तद् दानं हायनं स्मृतम् ॥ १०१३ ॥

राष्ट्रं प्रदीयते यत् तु तद् दानं देश्यमुच्यते ।
राष्ट्रोत्थकरदानं यत् तत् स्मृतं करजं बुधैः ॥ १०१४ ॥

वारणस्य प्रदानं यत् तद् दानं दन्तिसंज्ञितम् ।
हयस्य दानमाख्यातं सप्तिजं नीतिकोविदैः ॥ १०१५ ॥

अगृहीतकरो वाऽपि प्रगृहीतकरोऽपि वा ।
ग्रामः प्रदीयते यत् तु तद् दानं ग्रामजं मतम् ॥ १०१६ ॥

पुत्रपौत्रप्रपौत्रेण यद्वै चैव हि भुज्यते ।
अचालत्वेन यत् किञ्चित् तद् दानं शासनं स्मृतम् ॥ १०१७ ॥

रत्नेन जातरूपेण घटितं चारु भूषणम् ।
दीयते यत् तु तद् दानं भूषाख्यं समुदाहृतम् ॥ १०१८ ॥

नानावर्णविचित्राणि नानासूत्रमयानि च ।
नानादेशसमुत्थानि सूक्ष्माणि च घनानि च ॥ १०१९ ॥

वस्त्राण्यतिमनोज्ञानि प्रभूतानि प्रसादतः ।
दीयते यत् तु तद् दानं वसनं परिकीर्त्तितम् ॥ १०२० ॥

आसनं चामरं छत्रं यानं सम्माननोचितम् ।
मानवद् दीयते यत् तु तद् दानं प्रतिपत्तिकम् ॥ १०२१ ॥

रौप्य काञ्चन-रत्नानि सञ्जायन्ते यतो भुवः ।
सा खनिर्दीयते यत् तु तदाकरमितीरितम् ॥ १०२२ ॥

दीयन्ते यत्र निष्काणि प्रभूतानि वराणि च ।
तद् दानं रुक्मजं प्रोक्तमर्थशास्त्रविचक्षणैः ॥ १०२३ ॥

भूषणैर्भूषिता कन्या लक्षणैश्च समन्विता ।
विधिवद् दीयते यत् तु कन्यादानं तु तद् विदुः ॥ १०२४ ॥

रूपयौवनसम्पन्ना नृत्यगीतविशारदा[1] ।
वेश्या प्रदीयते यत् तु तद् दानं वैश्यमुच्यते ॥ १०२५ ॥

यत्रालया बहवः सन्ति वणिजस्योपजीविनः ।
रत्नाकरस्य वेलायां बहुपण्यप्रचारिणः ॥ १०२६ ॥

अपूर्वोपायनोपेतं पट्टनं बहुवस्तुदम् ।
दीयते यत् तु तद् दानं वेलाकरमिति स्मृतम् ॥ १०२७ ॥

यदसाध्यं हि भेदस्य तद् दानेन प्रसिध्यति ।
पशुर्दत्तेनेह भवति दानेनोभयलोकजित् ॥ १०२८ ॥

---

१ D °विशारदैः ।

न सोऽस्ति लोके दानेन वशगो यो न जायते ।
देवा अपि भवन्तीह वशगाः सर्वदेहिनाम् ॥ १०२९ ॥

दानं श्रेयस्करं श्रेष्ठं दानं सर्वार्थसाधकम् ।
दानशीलो नृपो लोके देववत् पूज्यते जनैः ॥ १०३० ॥

इति दानाध्यायः ॥ १९ ॥

उपायत्रितयेनापि यो न शक्यो भवेद् रिपुः ।
तस्य दण्डं प्रयुञ्जीत बलवान् यदि भूपतिः ॥ १०३१ ॥

सामादीनां प्रयोक्तारमशक्तं मन्यते द्विषः ।
तस्माद् दण्डं प्रयुञ्जीत दण्डो हि वशकृन्नृणाम् ॥ १०३२ ॥

बलिष्ठेन तथा कार्या दण्डा द्वादशभेदजाः ।
अशक्तेन त्रयः कार्या एवं पञ्चदश स्मृताः ॥ १०३३ ॥

अन्ये च दण्डाः कर्तव्या भूभुजा धर्मवर्तिना ।
वधः क्लेशोऽर्थहरणो जनानां हस्तशासकः ॥ १०३४ ॥

देशनाशश्च शत्रूणां जनाङ्गच्छेदकस्तथा ।
गोग्रहो धान्यहरणो बन्दिग्राहस्तथाऽपरः ॥ १०३५ ॥

देशदाहो धनादानः सर्वस्वहरणोऽपरः ।
दुर्गभङ्गः स्थानदाहो देशनिर्वासकस्तथा ॥ १०३६ ॥

युद्धावहो महादण्डः शत्रुसंहारकारकः ।
उपायानां तुरीयश्च कथितः सोमभूभुजा ॥ १०३७ ॥

वनानि यत्र छेद्यन्ते भेद्यन्ते च जलाशयाः ।
ग्रामाश्च यत्र दह्यन्ते स दण्डो देशनाशकः ॥ १०३८ ॥

नासिका श्रवणद्वन्द्वं छिद्यते देशवासिनाम् ।
जनानां यत्र दण्डोऽसौ जनाङ्गच्छेदनो मतः ॥ १०३९ ॥

---

१ D छिद्यन्ते भिद्यन्ते

देशजाः पशवः सर्वे गृह्यन्ते सहसा बलात् ।
दण्डोऽसौ गोग्रहो नाम विख्यातः परभूमिषु ॥ १०४० ॥

गर्भेषु पिहितं धान्यं क्षेत्रसस्यशिखाहृतम् ।
आपणे पुञ्जितं यच्च खले राशीकृतं च यत् ॥ १०४१ ॥

तत् सर्वं ह्रियते यत् तु रिपुराष्ट्रेषु संस्थितम् ।
दण्डोऽसौ धान्यहरणो देशदुर्भिक्षकारकः ॥ १०४२ ॥

कुटुम्बिनो गृहस्था ये धनिका व्यवहारिणः ।
नीयन्ते यत्र बद्ध्वा ते बन्दिग्राहः स उच्यते ॥ १०४३ ॥

जनानामभयं दत्त्वा तत्र स्थित्वा तथाऽन्यजम् ।
आत्मसात् क्रियते राष्ट्रं स दण्डो देशहारकः ॥ १०४४ ॥

आक्रम्य सैनिकैर्ग्रामान् बलात् कृत्वा सुसङ्गतिम् ।
आहरेत् काञ्चनं दण्डो बला(धना)दानः स उच्यते ॥ १०४५ ॥

महत्या सेनया युक्तः ख्यातं नगरपट्टनम् ।
आवेष्ट्य लुप्यते यत्र धन-धान्य-गवादिकम् ॥ १०४६ ॥

कोशभाण्डानि वस्त्राणि गृहोपकरणानि च ।
यस्माच्च गृह्यते सर्वं सर्वस्वहरणो हि सः ॥ १०४७ ॥

चतुरस्रं लिखेत् तज्ज्ञः कोटचक्रं विराजितम् ।
तत्र न्यासं प्रकुर्वीत नक्षत्राणां यथाक्रमम् ॥ १०४८ ॥

सर्वेष्वीशानकोणेषु कृत्तिकादिचतुष्टयम् ।
अन्तर्निर्गैर्लिखेत् तत्र कोटचक्रे विचक्षणः ॥ १०४९ ॥

विनिर्गच्छैस्तथा लेख्यं पुनर्वस्वादिकत्रयम् ।
पूर्वस्यां दिशि चाऽऽग्नेयकोणादन्तर्विशंस्तथा ॥ १०५० ॥

चतुष्टयं मघादीनां पुनर्निर्गमतो लिखेत् ।
चित्रादित्रितयं याम्ये नैर्ऋतेऽन्तर्विशैर्लिखेत् ॥ १०५१ ॥

---

१ B °खापहं, CE °खापहतं ।

भैत्रादिकचतुष्कं तु निर्गच्छन्‌ पश्चिमे क्षिपेत्‌ ।
उत्तरादित्रयं तद्वत्‌ कोणाद्‌ वायोर्दिशं क्षिपेत्‌ ॥ १०५२ ॥

धनिष्ठादिचतुष्कं तु पुनरुत्तरनिर्गतम्‌ ।
रेवत्यादित्रयं क्षेप्यं नक्षत्राणामयं विधिः ॥ १०५३ ॥

अन्तःस्थचतुरस्रा ये रेखाया मध्यतः स्थिताः ।
स्तम्भतारा: समाख्याता ज्योतिर्विद्याविशारदैः ॥ १०५४ ॥

तस्य बाह्यस्थितास्तारा बाह्यो प्राकारसञ्ज्ञाः ।
ततो बाह्यस्थितास्त्वन्यास्तारा बाह्याः प्रकीर्तिताः ॥ १०५५ ॥

स्तम्भप्राकारवर्तीनि नक्षत्राण्यपराणि हि ।
इतराणि विजानीयाद्‌ बाह्यानीति विचक्षणः ॥ १०५६ ॥

अन्तःस्थिते ग्रहे पापे कोटनाशं समश्नुते ।
शुभग्रहे च बाह्यस्थे बहिःस्थानां जयो भवेत्‌ ॥ १०५७ ॥

यस्यां दिशि भवेच्चन्द्रस्तस्यां खड्गी विनिष्पतेत्‌ ।
खड्गीस्थानं परिज्ञाय तत्र कुर्वीत सङ्गरम्‌ ॥ १०५८ ॥

परिखासंस्थितं तोयं खनित्वा परिवाहयेत्‌ ।
सेतुं वा कारयेत्‌ तत्र पूरयेद्‌ वा मृदादिभिः ॥ १०५९ ॥

यद्यगाधं महत्‌ तोयं तरेद्‌ वा तरवादिभिः(?) ।
एवमुपायै सैन्यानि दुर्गं वारिमयं जयेत्‌ ॥ १०६० ॥

दुरारोहं तु गिरिजं दुर्गमावेष्ट्य सेनया ।
अप्रवेशात्‌ तु धान्यानां दुर्गस्थानामनिर्गमात्‌ ॥ १०६१ ॥

जलतृणादिरोधाच्च निर्बन्धाद्‌ भेदतोऽपि च ।
एवंविधैरुपायैश्च गिरिदुर्गं जयेन्नृपः ॥ १०६२ ॥

पाषाणैरिष्टकाभिर्वा मृदा वा निर्मितं च यत्‌ ।
तद्‌ दुर्गं यन्त्रपाषाणैः खननैश्च निपातयेत्‌ ॥ १०६३ ॥

[illegible] ।
नदद्भिः संस्थितैर्योधैः [illegible] ॥ १०६४ ॥

[illegible]रपि ।
आरोहद्भिर्महानीकैः शूरैर्निःश्रेणिकाश्रितैः ॥ १०६५ ॥

दन्तिदन्तप्रहाराघातैर्घोषोन्मुक्तशरोत्करैः ।
गिरिदुर्गविधानेन दुर्गमित्थमाहरेत् ॥ १०६६ ॥

कुठारैः शतसाहस्रैः छेदयेद् विटपांस्तरून् ।
दहन् दावाग्निना वाऽपि वनदुर्गं जयेन्नृपः ॥ १०६७ ॥

पूर्णानि जलभाण्डानि तोयैर्दूरसमाहृतैः ।
महिषोष्ट्रबलीवर्दैर्बहुभैर्वाऽपि किंकरैरपि ॥ १०६८ ॥

आनीय च निजानीकैः सन्तर्प्य च चतुर्दिशम् ।
आवेष्ट्य च खनेत् कूपानगाधांश्च समन्ततः ॥ १०६९ ॥

आरभेत ततो युद्धं यन्त्रपाषाणपावकैः ।
अनलस्या(लं वा)नुकूलेन वायुना समुद्दापयेत ॥ १०७० ॥

अग्नितैलमयं वह्निं सर्वतो धुक्षयेद्ततः ।
जलाभावेन सन्तप्ता नाशमेष्यन्ति दुर्गगाः ॥ १०७१ ॥

तोयपानेन सन्तृप्तं कुर्यादात्मबलं नृपः ।
एवंप्रकारैरन्यैश्च मरुदुर्गं प्रसाधयेत् ॥ १०७२ ॥

साधयेद् दारुजं दुर्गं चूर्णनाद् गजघट्टनैः ।
पाषाणपातिभिर्यन्त्रैर्दाहनाद् दहनेन वा ॥ १०७३ ॥

नरदुर्गं जयेद् राजा गजाश्वबलसंयुतः ।
एवं दण्डः समाख्यातो दुर्गभङ्गसमाह्वयः ॥ १०७४ ॥

यस्मिन् पुरे वसेत्प्रभुः सपुत्रबलवाहनः ।
तत् पुरं राजनिलयं साट्टप्राकारतोरणम् ॥ १०७५ ॥

---

१ DE °पातकैः ।

अन्तःपुरे पुरन्ध्रीणां रङ्गाणि भवनानि च ।
निकेतनानि पुत्राणाममात्यानां गृहाणि च ॥ १०७६ ॥

सचिवानां निवासाश्च मन्त्रिणां सदनानि च ।
अन्येषां च मनुष्याणां मन्दिराणि बहूनि च ॥ १०७७ ॥

मन्दुरा गजशालाश्च विविधानापणानपि ।
भस्मसात् कुरुते यत् तु स दण्डः स्थानदाहकः ॥ १०७८ ॥

देशत्यागपरिभ्रष्टः कृतभोगपरिच्युतः ।
गिरिकन्दरकान्तारनिकुञ्जभवनाश्रयः ॥ १०७९ ॥

वियुक्तो दारपुत्रैश्च बन्धुभिः सचिवैस्तथा ।
क्षुत्पिपासापरीतश्च चिन्ताशोकसमन्वितः ॥ १०८० ॥

यानासनविहीनश्च गजवाजिविवर्जितः ।
शत्रोरेवंविधो दण्डो देशनिर्वासकः स्मृतः ॥ १०८१ ॥

ज्ञात्वा स्वरबलं राजा बलं भूमेस्तथैव च ।
कुर्वीत सर्वकार्याणि सङ्ग्रामं तु विशेषतः ॥ १०८२ ॥

अतः स्वरबलं वक्ष्ये दशधा प्रविभाजितम् ।
मात्रा वर्णो ग्रहो जीवो राशिरेवं च पञ्चधा ॥ १०८३ ॥

बालः कुमारस्तरुणो वृद्धश्चास्तङ्गतः स्वरः ।
द्वितीयः पञ्चभेदोऽयमित्थं दशविधः स्मृतः ॥ १०८४ ॥

अकारः प्रथमस्तस्मादिकारस्तदनन्तरम् ।
उकारश्चैवमेकार ओकारो मातृका स्मृता ॥ १०८५ ॥

ककारादिहकारान्तान् वर्णान् ङञणवर्जितान् ।
पञ्चत्रिंशत्सु कोष्ठेषु पञ्च पञ्च क्रमाल्लिखेत् ॥ १०८६ ॥

---

१ ABCE हतो मो° । २ B दास° ।

रेखाः पञ्चोर्ध्वगाः कार्यास्तिर्यगष्टौ च राजयः ।
पञ्चत्रिंशद् भवन्त्येवं कोष्ठास्तत्सन्निवेशतः ॥ १०८७ ॥

तत्रादिपञ्चकोष्ठेषु पञ्चमात्रास्वरान् क्रमात् ।
लिखेद् वर्णानधस्तेषां कादीन् ङञणवर्जितान् ॥ १०८८ ॥

अकारपङ्क्तौ ये वर्णा अधोऽधः संव्यवस्थिताः ।
अकारसमधर्माणः सर्वे वर्णाः स्वराश्च ते ॥ १०८९ ॥

इकारादिस्वरेष्वेवमधस्ताद् ये व्यवस्थिताः ।
तत्तद्धर्माण एव स्युस्ते वर्णाः स्वरसंज्ञिताः ॥ १०९० ॥

नामादौ यो भवेद् वर्णः स स्वरः परिकीर्तितः ।
संयोगे प्रथमो ग्राह्यः स्वराणां नियमो न हि ॥ १०९१ ॥

मात्रास्वराः समाख्यातास्तथा वर्णस्वरा मया ।
ग्रहस्वरा निरूप्यन्ते साम्प्रतं राशिभेदतः ॥ १०९२ ॥

मेषवृश्चिकसिंहानामकारः स्याद् ग्रहस्वरः ।
एवं ग्रहस्वराः प्रोक्ताः कथ्यन्ते जीवसंज्ञिताः ॥ १०९३ ॥

यत्र नाम्नि यावन्तो वर्णाः स्वरसमन्विताः ।
तांश्च वर्गक्रमेणैव गणयेच्च स्वरांस्तथा ॥ १०९४ ॥

गणयित्वा कृतं राशिं विभजेत् पञ्चभिः पुनः ।
अवशिष्टस्तु यो राशिर्जीवस्वर इतीरितः ॥ १०९५ ॥

ग्रहस्वरः समाख्यातः प्रोक्तो जीवस्वरस्तथा ।
राशिस्वरमतो वक्ष्ये स्वरशास्त्रानुसारतः ॥ १०९६ ॥

प्रोक्तो राशिस्वरोऽकारो रेवत्यादिषु सप्तसु ।
एवं परेष्विकाराद्याः स्वराः पञ्चसु पञ्चसु ॥ १०९७ ॥

राशिस्वराः समाख्याता वक्ष्यन्ते तिथिजादयः ।
वदेत्वकारो नन्दायां भद्रायामिः स्वरः सदा ॥ १०९८ ॥

स्वस्य ग्रहबलं प्राप्य परेषां ग्रहदूषणम् ।
कुर्वीत तुमुलं युद्धं शत्रुसंहारकारकम् ॥ ११११ ॥

जीवस्वरगतान् वर्णान् गणयित्वा विचक्षणः ।
यत्र नास्ति निजाधिक्यं तत्र कुर्वीत सङ्गरम् ॥ १११२ ॥

रेवत्यादिषु धिष्ण्येषु सङ्गता यत्र ये ग्रहाः ।
राशिस्वरे विचार्यास्ते शुभाश्चेद् युद्धमाचरेत् ॥ १११३ ॥

एकः स्वरश्चेदुभयोः प्रीतिं प्रकुरुते पराम् ।
द्वितीयः कुरुते मानं तृतीयः कार्यपोषकः ॥ १११४ ॥

उपेक्षकश्चतुर्थश्च पञ्चमो जयनाशनः ।
स्वरमैत्रीं विदित्वैवं नृपः कुर्वीत सङ्गरम् ॥ १११५ ॥

मात्रास्वरो यदोदेति तदा कुर्वीत शोभनम् ।
गर्भाधानादिकं कर्म निधिधान्यादिसङ्ग्रहम् ॥ १११६ ॥

वापनं सर्वसस्यानां पुरवेश्मप्रवेशनम् ।
रसायनप्रयोगं च व्याधीनां च चिकित्सितम् ॥ १११७ ॥

मात्रास्वरे कुमारे तु विवाहः प्रीतिकृद् भवेत् ।
भृत्यानां सङ्ग्रहः शस्तः स्वामिसंश्रयणं तथा ॥ १११८ ॥

उत्कोचनपरानीनां ग्रामगेहप्रवेशनम् ।
वैरिनिर्मूलनोद्युक्तो यात्रां कुर्वीत भूपतिः ॥ १११९ ॥

यूनि मात्रास्वरे जाते पट्टबन्धाभिषेचनम् ।
गजाद्यारोहणं शस्तं वरनारीसमागमः ॥ ११२० ॥

धूतमाहवकर्माणि यात्रा शस्त्रविसर्जनम् ।
कुर्वीत कदनं राजा रिपूणां प्राणखण्डनम् ॥ ११२१ ॥

---

१ D नक्षेत्रेषु  २ D तु सततं

यदा मात्रास्वरो वृद्धस्तदा सन्धिर्विधीयते ।
शान्तिकं पौष्टिकं कर्म मोक्षदीक्षां समाचरेत् ॥ ११२२ ॥

मृते मात्रास्वरे जाते कुर्यादनशनं व्रतम् ।
आरभ्य पूर्वदिग्भागाद् रेखामावर्तयेत् सुधीः ॥ ११२३ ॥

पूर्वान्नयेत वायव्यं वायव्याद् याम्यमानयेत् ।
याम्यादीशानदिग्भागमैशानात् पश्चिमं नयेत् ॥ ११२४ ॥

पश्चिमात् कोणमाग्नेयमाग्नेयादुत्तरं नयेत् ।
उत्तरान्नैर्ऋतं कोणं नैर्ऋतादैन्द्रमानयेत् ॥ ११२५ ॥

एवमष्टाश्रितं चक्रं जायते सन्निवेशतः ।
तत्र चैत्रादिमासानां विन्यासो दिक्षु वक्ष्यते ॥ ११२६ ॥

चैत्रमासोऽर्द्धवैशाखः पूर्वभागे भवेत् सदा ।
अर्द्धं वैशाखमासस्य ज्येष्ठं वायव्यतः क्षिपेत् ॥ ११२७ ॥

आषाढं श्रावणस्यार्द्धं याम्यभागे प्रकल्पयेत् ।
श्रावणस्यार्धमैशान्यां नभस्यं च विनिक्षिपेत् ॥ ११२८ ॥

आश्विनं कार्त्तिकस्यार्द्धं वारुण्यां दिशि विन्यसेत् ।
अर्द्धकार्त्तिक-मार्गौ च हुताशनदिशि क्षिपेत् ॥ ११२९ ॥

पौषमर्धं च माघस्य कौबेर्यां ककुभि क्षिपेत् ।
माघस्यार्द्धं फाल्गुनं च नैर्ऋत्यां दिशि कल्पयेत् ॥ ११३० ॥

यस्यां दिशि स्थितो मासः सार्द्धस्तत्रोदयो भवेत् ।
तावत्कालं ध्रुवः सोऽपि यावन्मासचतुष्टयम् ॥ ११३१ ॥

यामार्द्धं तु चक्रं भूमेः क्रमाद् दिक्षु व्यवस्थितम् ।
रेखाविन्यासमार्गेण क्रमाद् भ्राम्यति मेदिनी ॥ ११३२ ॥

उदयादस्तपर्यन्तमस्तादप्युदयावधि ।
चतुर्यामेषु मेदिन्यां दिक्षु भ्रमणमष्टसु ॥ ११३३ ॥

भूबलं पृष्ठतः कार्यं दक्षिणे वा जिगीषुणा।
एवमन्यानि कार्याणि सिद्धिं यान्ति विनिश्चयम् ॥ ११३४ ॥

अस्यैव चक्रराजस्य कोणानाश्रित्य विन्यसेत्।
अष्टौ वर्गानकारादीन् प्रादक्षिण्येन पूर्वतः ॥ ११३५ ॥

अवर्गे गरुडः प्रोक्तः कवर्गे वृषदंशकः।
चवर्गे मृगराजः स्यात् टवर्गे सरमासुतः ॥ ११३६ ॥

तवर्गे पन्नगः प्रोक्तः पवर्गे मूषकस्तथा।
यवर्गे तु मृगः प्रोक्तः शवर्गे मेष इष्यते ॥ ११३७ ॥

पूर्वाद्यैर्नैर्ऋतपर्यन्तं भक्षकाः समवस्थिताः।
पश्चिमाद् रौद्रदिग्भागं यावद् भक्ष्या व्यवस्थिताः ॥ ११३८ ॥

भक्षकात् पञ्चमे स्थाने स्थितो भजति भक्ष्यताम्।
तस्माद् विचार्य यत्नेन शत्रुं पञ्चमतां नयेत् ॥ ११३९ ॥

एवं नामबलं चक्रे विचार्य पृथिवीपतिः।
द्यूतं समाह्वयं युद्धं नारभेत जयोत्सुकः ॥ ११४० ॥

ब्रह्माणी पूर्वदिग्भागे प्रतिपन्नवमे तिथौ।
द्वितीयायां दशम्यां च माहेशी सौम्यदिग्गता ॥ ११४१ ॥

एकादश्यां तृतीयायां कौबेरी वह्निदिक्स्थिता।
द्वादश्यां च चतुर्थ्यां च वैष्णवी नैर्ऋते स्थिता ॥ ११४२ ॥

पञ्चम्यां च त्रयोदश्यां वाराही दक्षिणे स्थितिः।
चतुर्दश्यां तथा षष्ठ्यामिन्द्राणी पश्चिमोदया ॥ ११४३ ॥

सप्तम्यां पौर्णमास्यां च वायव्ये चण्डिकास्थितिः।
अमावास्याऽष्टमीतिथ्योर्महालक्ष्मीस्तथेशगा ॥ ११४४ ॥

दक्षिणे पृष्ठतः कार्या योगिन्यो विजिगीषुणा ।
योगिनीनां चक्रं स्वेवं कथितं सोमभूभुजा ॥ ११४५ ॥

इति योगिनीचक्रम् ॥

युद्धपूर्वदिने राजा कृतोत्साहः सभागतः ।
कुमारमण्डलाधीशान् सामन्तान् मान्यकानपि ॥ ११४६ ॥

सुवर्णवस्त्राभरणैस्तोषयेत् सैन्यकांस्तथा ।
वाग्भिः प्रोत्साहयेत् तांश्च गुणकीर्तनमानवैः ॥ ११४७ ॥

तेषां प्रतिज्ञां संश्रित्य सुभटानां नृपोत्तमः ।
मातङ्गान् मदसंयुक्तान् वाजिनश्च जवोत्तमान् ॥ ११४८ ॥

दद्याद् यथार्हं सर्वेषां सन्नाहमभयकाङ्क्षया ।
ततो विसर्जयेत् सर्वान् युद्धाय कृतनिश्चयः ॥ ११४९ ॥

तस्यां रात्र्यावल्लानैश्च पूरयेद् गगनाङ्गणम् ।
महातूर्यघोषैश्च काहलाशङ्खनिस्वनैः ॥ ११५० ॥

सिंहनादैर्भटानां तु त्रासयेद् रिपुसैनिकान् ।
अभिवाद्य ततो राजा शस्त्राणि कुलदेवताः ॥ ११५१ ॥

ततः शयीत मेदिन्यां कुशानास्तीर्य यत्नतः ।
ततः प्रातः समुत्थाय निरीक्ष्य घृत-दर्पणौ ॥ ११५२ ॥

स्नात्वा तीर्थजलैः पुण्यैर्दिव्यमाल्याम्बरविभूषितः ।
समाराध्य जगन्नाथमिष्टमिष्टफलप्रदम् ॥ ११५३ ॥

ततः कृत्वा महापूजां विविधां कुलदैवते ।
धेनुं भूमिं हिरण्यं च विप्रेभ्यो विधिनार्पयेत् ॥ ११५४ ॥

तदाशिषः समादाय नीराजितहयद्विपः ।
दक्षिणाग्नसुरोल्लेखात् हयानां हेषितादपि ॥ ११५५ ॥

---

१ B. चैवं  २ B.E. रात्र्याम्

वामेतरविषाणाग्रवेष्टनात् स्वकरेण च ।
बृंहितेन गजानां च जानीयाज्जयमञ्जसा ॥ ११५६ ॥

नराणां शुभवाक्यैश्च मङ्गलद्रव्यदर्शनैः ।
प्रदक्षिणागमैश्चापि भरद्वाजशिखण्डिनाम् ॥ ११५७ ॥

अन्यैश्च शकुनैर्भव्यैर्जयमङ्गलसूचकैः ।
दक्षिणाक्ष्णः परिस्पन्दाद् दक्षिणस्य भुजस्य च ॥ ११५८ ॥

मनसश्च प्रसादेन स्वानुकूलानिलेन च ।
एवं निमित्तैर्निश्चित्य जयं समरदुर्जयः ॥ ११५९ ॥

शुभस्थानस्थितैः सर्वैर्ग्रहैस्ताराभिरेव च ।
उदितेन स्वरेणाथ जयभूमिबलेन च ॥ ११६० ॥

निमित्तैर्विहितोत्साहो निर्गत्य निजमन्दिरात् ।
ताडयित्वा महाभेरीं प्रतिसैनिकभीषणीम् ॥ ११६१ ॥

धनुषां द्वे शते गत्वा तत्र स्थित्वा नृपोत्तमः ।
मेळयित्वा बलं सर्वमेवमाघोषयेत् ततः ॥ ११६२ ॥

तस्मै दास्यामि नियुतं राजानं हन्ति यो रणे ।
तत्कुमारनिहन्तॄणां दास्यामि प्रयुतत्रयम् ॥ ११६३ ॥

सामन्तमण्डलाधीशहन्तॄणां प्रयुतं तथा ।
सचिवामात्यहन्तॄणामयुतं पारितोषिकम् ॥ ११६४ ॥

प्रधानयोधहन्तॄणां दास्ये पञ्चसहस्रकम् ।
द्विसहस्रं प्रसादेन प्रदास्ये गजघातिनाम् ॥ ११६५ ॥

सहस्रं प्रतिदास्यामि स्यन्दनस्य विघातिनाम् ।
अश्वसादिनिहन्तॄणां प्रदास्ये शतपञ्चकम् ॥ ११६६ ॥

---

१ BCE सर्वैर्भव ।

शतं तस्मै प्रदास्यामि समानयति यः शिरः ।
एवं प्रक्रोश्य तान् सर्वान् प्रयायाद् युद्धसम्मुखम् ॥ ११६७ ॥

सुभटान् बलसंयुक्तान् हयविद्याविशारदान् ।
वरवाजिसमारूढान् भूपरीक्षाविचक्षणान् ॥ ११६८ ॥

द्विशतं वा शतं वाऽपि तदर्धं हयसादिनः ।
पुनः प्रस्थापयेद् राजा युद्धभूमिपरीक्षणे ॥ ११६९ ॥

गत्वा समागतानां तु विज्ञप्त्या च स्वयो गुणान् ।
परेषां व्यूहरचनां परिज्ञाय क्षितीश्वरः ॥ ११७० ॥

संस्थूलस्थूलवल्मीकद्रुमगुल्मोपकण्टके ।
भूभागे रचयेद् राजा व्यूहं व्यूहविचक्षणः ॥ ११७१ ॥

अल्पद्रुमोपलाच्छिद्राऽलङ्घनीयदरीस्थिता ।
निःशर्करा विपङ्का भूरश्वव्यूहाय शस्यते ॥ ११७२ ॥

निःस्थाणुसिकतापङ्का निर्वल्मीकोपला समा ।
केदारव्रततिश्वभ्रवृक्षगुल्मविवर्जिता ॥ ११७३ ॥

अतीवकठिना भूश्च खुरचङ्क्रमणक्षमा ।
स्थिरा चक्रसमा धात्री रथव्यूहे प्रशस्यते ॥ ११७४ ॥

सुगम्यशैला विषमा मृदुवृक्षावमेदिनी ।
सुपङ्कदरभङ्गा भूर्गजव्यूहे वरा मता ॥ ११७५ ॥

सर्वदोषोज्झिता भूमिः कुत्रचिद् वारिसंयुता ।
विशाला गुणभूयिष्ठा चतुरङ्गबलोचिता ॥ ११७६ ॥

एवं परीक्ष्य भूभागं यस्मिन् यत्र यथोचितम् ।
तत्र संरचयेद् व्यूहान् नृपो युद्धविशारदः ॥ ११७७ ॥

---

१ E प्रतिव्यूहं दि° । २ ABC निम्नाभा निर्दरा ।

सर्वलक्षणसम्पूर्णे भूभागे रिपुमर्दनः ।
रचयेदुत्तमं व्यूहं परव्यूहविभेदकम् ॥ ११७८ ॥

मुखं पूर्वविभागः स्यादुरश्च तदनन्तरम् ।
उरसः पश्चिमे भागे मौरस्यं परिकीर्तितम् ॥ ११७९ ॥

मौरस्यस्य तथा पृष्ठे प्रतिग्रह इतीरितः ।
कक्षौ प्रकक्षौ पक्षौ च प्रपक्षौ पार्श्वयोः क्रमात् ॥ ११८० ॥

प्रतिग्रहपरो भागः पृष्ठमित्यभिधीयते ।
एवं व्यूहविभागांश्च विज्ञाय नृपतिस्ततः ॥ ११८१ ॥

मुखे मदमुखं नागं शूरारूढं सुशिक्षितम् ।
तनुत्राणसमोपेतं योधद्वयसमन्वितम् ॥ ११८२ ॥

पश्चिमासनरूढेन सुभटेन समन्वितम् ।
त्रिशतैः षट्शतैर्वापि नवभिर्वा तथा शतैः ॥ ११८३ ॥

त्रिधा विभक्तैः सुभटैः स्थानत्रयमुसंस्थितैः ।
पृष्ठे च कक्षभागे च रक्षितं खड्गपाणिभिः ॥ ११८४ ॥

प्रकक्षदेशनिक्षिप्तैश्चण्डकोदण्डमण्डितैः ।
सुभटैः शतसङ्ख्यातैः सुलक्षैर्दृढघातिभिः ॥ ११८५ ॥

पक्षदेशे तथा शूरैः शक्तिखेटकधारिभिः ।
सहस्रद्वयसङ्ख्यातैस्तदर्धैर्वा शतैर्वृतम् ॥ ११८६ ॥

प्रपक्षे जवसंयुक्तैर्गात्रत्राणसुरक्षितैः ।
अश्वैः सर्वायुधोपेतैर्वाहकैश्च समन्वितैः ॥ ११८७ ॥

शतपञ्चकसङ्ख्यातैः प्रपक्षद्वयकल्पितैः ।
तुरगैः पत्तिभिः शूरैरावृतं पुरतो न्यसेत् ॥ ११८८ ॥

---

१ D °धारिभिः ।

वारणं सर्वसैन्यानां वारणं वैरिवारणम् ।
एवंविधबलोपेतं व्यूहस्याग्रे नियोजयेत् ॥ ११८९ ॥

त्रिमुखं द्विमुखं तद्वदेकवक्त्रमथापि वा ।
परव्यूहस्य भेदार्थं कुर्याद् व्यूहमुखं नृपः ॥ ११९० ॥

उरःस्थाने महीपालः श्रेणपाठविकं बलम् ।
अमित्रं च तथा फल्गु युद्धभूमौ प्रकल्पयेत् ॥ ११९१ ॥

औरस्ये युद्धभाण्डानि शस्त्राणि विविधानि च ।
वारि भूरि नयेद्युद्धे तृषार्तानां सुखाप्तये ॥ ११९२ ॥

प्रतिग्रहप्रदेशे तु स्वयं तिष्ठेन्महीपतिः ।
भद्रलक्षणसम्पूर्णमैरावणकुलोद्भवम् ॥ ११९३ ॥

विन्ध्यांशकशुभाङ्कं कालिङ्गवनसम्भवम् ।
भूभृच्छिखरसङ्काशं शिक्षितं तु यथाविधि ॥ ११९४ ॥

मदावस्थां चतुर्थीं च सम्प्राप्तं गिरिसन्निभम् ।
शूरं महाबलं दान्तं धीरमन्वर्थवेदिनम् ॥ ११९५ ॥

सुवर्णघटितोदारपक्षरक्षासमन्वितम् ।
तनुत्राणसमोपेतं दृढदेशाङ्कधारिणम् ॥ ११९६ ॥

मयूरपिच्छगुच्छाढ्यध्वजदण्डविराजितम् ।
नानावर्णविचित्राङ्गं पताकापरिशोभितम् ॥ ११९७ ॥

हेमकान्तःस्थितैर्योधैर्युक्तं कुन्तधरावृतम् ।
पाशाद्यस्त्रादिना युक्तं शक्तितोमरपाणिना ॥ ११९८ ॥

---

१ अत्यन्ततृ २ A आदर्शपुस्तकेऽयमधिकः पाठः— मौक्तिकप्रबलं सम्यक् पुमान् प्रतिग्रहे न्यसेत् । ३ ABC च कुर्वीत । ४ B [illegible] ।

अन्तराश्वव्यूहेन खेटकद्वयधारिणा ।
ईदृग्गुणयुतं नागमारोहेद् विजयोद्यतः ॥ ११९९ ॥

विज्ञातनामभिर्मौलैः छुरिकावर्मपाणिभिः ।
अङ्गरक्षान्वितैः शूरैर्दक्षैः सन्नद्धरक्षकैः ॥ १२०० ॥

कक्षस्थैर्दक्षसाहस्रैस्तदर्धैर्वा सुरक्षितः ।
प्रकोष्ठे सचिवामात्य-कुमारैश्च घटान्वितः ॥ १२०१ ॥

मित्र-भृत्यबलैः पश्चे चापमायकधारिभिः ।
शक्ति-तोमर-निस्त्रिंश-कुन्त-मुद्गरपाणिभिः ॥ १२०२ ॥

वरैर्वारणसन्नद्धैः सुभटैर्लक्षसम्मितैः ।
क्रमशः स्थापितैर्योधैर्यथोद्दारितनामभिः ॥ १२०३ ॥

नानायुधधरैर्वीरैरश्वारूढैः सुशिक्षितैः ।
प्रकक्षेऽयुतयुग्मेन संवृतश्च महीपतिः ॥ १२०४ ॥

पृष्ठे भूमौ गजारूढपुष्पकान्तरसंस्थितैः ।
अवरोधवधूवृन्दै रक्षिभिः परिरक्षितैः ॥ १२०५ ॥

धनुष्काण्डाशितांशेन क्रोशेनाधिष्ठितस्तथा ।
तेषां तु पृष्ठरक्षार्थं नरवाजिबलं न्यसेत् ॥ १२०६ ॥

ईदृशीं व्यूहरचनां विधाय परवीरहा ।
व्रजेदब्धिरिव क्षुब्धो निगिरन् परवाहिनीम् ॥ १२०७ ॥

इति सैन्यरचनालक्षणम् ॥

शूराणां सिंहनादैश्च खुरारावैश्च वाजिनाम् ।
महामात्रकरास्फाल्यमानकुम्भगजगर्जितैः ॥ १२०८ ॥

भेरीमहारवाघोषैश्च काहलाशङ्खनिस्वनैः ।
युद्धाशंसिमहातूर्यनिनादैः स्फोटयन् दिशः ॥ १२०९ ॥

---

१ D °वर्म° । २ ABC °सन्नद्धसु°, D वारवाणेन स° ।

यतः फल्गु यतो भिन्नं यतो दूष्यैरधिष्ठितम् ।
तद् बलं प्रथमं हन्यादात्मनश्चापबृंहयन् ॥ १२१० ॥

सारं द्विगुणसारेण फल्गु सारेण पीडयेत् ।
संहतं तु गजानीकैः प्रचण्डैरवदारयेत् ॥ १२११ ॥

प्रचण्डैर्वीरमुख्यैश्च फल्गुसैन्यं विदारयेत् ।
अश्वव्यूहैर्भटानीकं वाजिव्यूहं तु दन्तिभिः ॥ १२१२ ॥

बाणसारैस्तथा कुन्तैः पाश-पट्टिश-तोमरैः ।
अग्निनैर्नाराचनैर्बाणैर्निर्भिन्द्याद् द्विपयूथपान् ॥ १२१३ ॥

प्रभूतकुञ्जरानीकघंटामङ्कुशघट्टनैः ।
पाटनैः करटिव्रातं द्विपतां रणमूर्द्धनि ॥ १२१४ ॥

विसृज्य राजचिह्नानि निश्चित्य नृपतेः पदम् ।
सर्वसैन्येन संयुक्तस्तत्र यायाज्जयोत्सुकः ॥ १२१५ ॥

नाराचैर्जर्जरीकृत्य कुन्तैर्निर्भिद्य निर्भरम् ।
चक्राद्यैर्निर्द्विधाकृत्य पाशैराकृष्य पातयेत् ॥ १२१६ ॥

सञ्चूर्ण्य मुद्गराघातैश्छित्त्वा परशुना भटान् ।
स्वारूढकुञ्जरेणाथ संयोज्य परवारणम् ॥ १२१७ ॥

तद्गतं स्वगजोद्दामदन्ताघातैर्निपात्य च ।
निस्त्रिंशेन रिपोश्छिन्द्यात् कुण्डलालङ्कृतं शिरः ॥ १२१८ ॥

एवं निहत्य सङ्ग्रामे दुष्टशत्रुं मदोद्धतम् ।
जयतूर्यनिनादेन हर्षयन् सुभटान् स्वकान् ॥ १२१९ ॥

कुमारामात्यसचिवान् सामन्तान् मण्डलेश्वरान् ।
विनिहत्यागतानां च दानं दद्याद् यथोदितम् ॥ १२२० ॥

---

१ D °क्टा° । २ ADE °योन्मुखः । ३ BC °कौ° । ४ D °यंश्च स्वसैनिकान् ।

द्विषतां रक्तपूरेण तर्पयित्वा तु मेदिनीम् ।
पिशितेन पिशाचांश्च क्रव्यादानन्त्रमालया ॥ १२२१ ॥

पलायनपरान् भीतान् रक्षयित्वा तु धर्मतः ।
आरोहमुक्तान् स्वीकृत्य त्वरया वरवारणान् ॥ १२२२ ॥

धेनुकाश्चोष्ट्रसङ्घांश्च निःशेषं कोशमेव च ।
परिगृह्य तथा सर्वं प्रयत्नाद् वीक्ष्य सर्वतः ॥ १२२३ ॥

एवं तु बध्यते यत्र युद्धे शत्रुर्महाबलः ।
नृपेण बलिना स स्याद् दण्डो युद्धवधाभिधः ॥ १२२४ ॥

बलशक्तिविहीनेन नृपेण रिपुघातिना ।
प्रयोज्याः स्युस्त्रयो दण्डा विषशस्त्राभिचारजाः ॥ १२२५ ॥

विषं हालाहलं शृङ्गि कालकूटं भयावहम् ।
वत्सनाभं चतुर्थं तु स्थावरं परिकीर्तितम् ॥ १२२६ ॥

सर्पदंष्ट्रादिसञ्जातं विषं तज्जङ्गमं विदुः ।
विरुद्धद्रव्यमिलितं कृत्रिमं विषमुच्यते ॥ १२२७ ॥

शात्रवाणां विरक्ता ये कृत्यास्ते पुरुषा वराः ।
तान् विभेद्य प्रदानेन रसं तैस्तु प्रयोजयेत् ।
तडाग-कूप-वापीषु तथा लघुसरस्सु च ॥ १२२८ ॥

स्नानोदके तथा तैले पादाभ्यङ्गे सपादुके ।
क्रीडापुष्करिणीमध्ये प्रयुञ्जीत विषं द्विषाम् ॥ १२२९ ॥

कुमार-सचिवामात्य—मन्त्रि-सेनाधिपेषु च ।
महावारणमुख्येषु तुरगषूत्तमेषु च ॥ १२३० ॥

एवं विषप्रयोगेण शत्रूणां क्षुद्रघातकम् ।
क्षीणेन क्रियते यत् तु विषदण्डः स उच्यते ॥ १२३१ ॥

---

१ BC -नागं । २ D विभिद्य ।

शूरश्च दृढभक्तश्च त्यक्तप्राणभयश्च यः ।
धीरश्च समयज्ञश्च यथोपायविचक्षणः ॥ १२३२ ॥

बन्धुपुत्रप्रदत्ताधिगृहीतबहुवेतनः ।
तेन घातं प्रयुञ्जीत प्रमत्तारिवधेच्छया ॥ १२३३ ॥

गीतवाद्यप्रसक्तेषु द्यूतक्रीडारतेषु च ।
मृगव्यासक्तचित्तेषु देवयात्राप्रसक्तिषु ॥ १२३४ ॥

अङ्गमल्लविनोदेषु तथाऽन्येषूत्सवादिषु ।
अन्तःपुरप्रचारेषु देवपूजापरेषु च ॥ १२३५ ॥

नीरक्रीडाविपण्णेषु भोजनास्थानवर्तिषु ।
अप्रेष्वन्येषु कार्येषु कुर्याद् वैरिषु घातनम् ॥ १२३६ ॥

पूर्वोदितगुणैस्तीक्ष्णैः सुभद्रैर्यन्त्रपातनम् ।
मायया क्रियते शस्त्राघातदण्डः स कीर्तितः ॥ १२३७ ॥

अथर्वविधितत्त्वज्ञैर्ब्राह्मणैर्विजितेन्द्रियैः ।
मन्त्र-तन्त्रविधानज्ञैर्दूरादुन्मूलयेद् रिपुम् ॥ १२३८ ॥

अभिचारिकहोमैस्तु मन्त्रैः परकम्पमारकैः ।
मन्त्रकीलनकैरुग्रैः कृत्यापांशुजपनादिभिः ॥ १२३९ ॥

मन्त्र-तन्त्रसुसिद्धैश्च पटहैः काहलादिभिः ।
पताकाकारकैर्दीपैर्धूपैर्मांगुरुकृत्तकैः ॥ १२४० ॥

वार्णमन्त्रप्रयुक्तैश्च सिद्धार्थकयुताञ्जनैः ।
मोहयेत् स्तम्भयेच्छत्रून् स्थानादुच्चाटयेत् तथा ॥ १२४१ ॥

विद्वेषयेच्च मित्राणि वशे कुर्याच्च विद्विषः ।
संहरेज्जीवितं यत् तु स्यात् स दण्डोऽभिचारकः ॥ १२४२ ॥

इति दण्डभेदाः ॥

१ D पर्का॰ । २ D ॰त्मकैः ।

व्यवहारान् नृपः पश्येद् विप्रैर्विद्वद्भिः सह ।
स्मृतिशास्त्रानुरोधेन रागद्वेषविवर्जितः ॥ १२४३ ॥

अदोषान् दूषयेद् राजा दोषयुक्तानदण्डयन् ।
अकीर्तिं महतीमेति दुर्गतिं चाधिगच्छति ॥ १२४४ ॥

ऋत्विक् पुरोहितः पुत्रो भ्राता बन्धुस्तथा सुहृत् ।
अदण्ड्यो नृपतेर्नास्ति स्वधर्माच्चलितो नरः ॥ १२४५ ॥

वेदशास्त्रार्थतत्त्वज्ञाः सत्यसन्धाश्च धार्मिकाः ।
सभ्या नृपतिना कार्या मित्रामित्रेषु वै समाः ॥ १२४६ ॥

धीरैरलोलुपैर्मान्यैर्लोकव्यापारकोविदैः ।
विप्रैः सह महीपालो गुण–दोषौ विचारयेत् ॥ १२४७ ॥

विचारे यत्र तिष्ठन्ति विप्राः श्रुतिविदस्त्रयः ।
पञ्च वा सप्त वा सा स्याच्छतक्रतुसमा सभा ॥ १२४८ ॥

तस्यां सभायां यः कश्चिद् धर्मज्ञः श्रुतिकोविदः ।
निर्दिष्टो वाप्यनिर्दिष्टः स तत्त्वं वक्तुमर्हति ॥ १२४९ ॥

न्याय्यं पन्थानमुत्सृज्य ये गतस्यानुयायिनः ।
सभ्यास्ते बाधनीयाः स्युर्मार्गे धर्मस्य शाश्वतम् ॥ १२५० ॥

अनिर्दिष्टश्च तत् सर्वं सत्यं ब्रूयात् समञ्जसम् ।
ज्ञात्वा वा न वदेत् तत्त्वं मिथ्यावादी च पापभाक् ॥ १२५१ ॥

कुलीनाः शीलवन्तश्च धनिनो वयसाऽधिकाः ।
अमत्सरा विशः कार्याः कियन्तोऽपि सभासदः ॥ १२५२ ॥

अलोभं सत्यसन्धं च धर्मशीलं प्रियंवदम् ।
धर्मशास्त्रार्थकुशलं लोकयात्राविचक्षणम् ॥ १२५३ ॥

विचारे पण्डितं दक्षं प्राड्विवाकतया युतम् ।
इङ्गिताकारतत्त्वज्ञमूहापोहविशारदम् ॥ १२५४ ॥

ब्राह्मणं श्रुतसम्पन्नं धर्मशास्त्रविशारदम् ।
आत्मनः प्रतिरूपं तु कुर्यादेकं महीपतिः ॥ १२५५ ॥

प्रागेव पृच्छति प्रायो वाक्यं वादार्थमागतो ।
विचारयति यः सम्यक् प्राड्विवाकस्ततः स्मृतः ॥ १२५६ ॥

व्यग्रस्य राजकार्येण देहजाड्येन वा स्वयम् ।
अपश्यतः प्रभोः कार्यं प्राड्विवाको विचारयेत् ॥ १२५७ ॥

विप्रालाभे तु कर्तव्यः कुलीनो दमसंयुतः ।
परत्र भीरुर्धर्मज्ञः शूरः शान्तो विमत्सरः ॥ १२५८ ॥

अनुद्वेगकरो नित्यं प्रजानां च हिते रतः ।
मेदोद्युक्तः[1] समर्थश्च क्षत्रियोऽपि सभापतिः ॥ १२५९ ॥

दौर्लभ्यात् क्षत्रियस्यापि वैश्यं कुर्यात् सभापतिम् ।
गुणाधिकं च मध्यस्थं जनानां सम्मतं नृपः ॥ १२६० ॥

विप्र-क्षत्र-विशः कार्याः अनुपन्यासवशाः क्रमात् ।
सर्वथाऽपि न कर्तव्यः शूद्रः[2] क्वापि विचारणे ॥ १२६१ ॥

लोभाद् वाऽपि भयाद् रागात् स्मृतिशास्त्रार्थनाशकाः ।
दण्डनीयाः पृथक् सभ्या विवादाद् द्विगुणं धनम् ॥ १२६२ ॥

सतां मार्गं समुल्लङ्घ्य बाधितो यो बलीयसा ।
निवेदयेत यद् राज्ञे तद् विवादपदं स्मृतम् ॥ १२६३ ॥

अभियोगो द्विधा ज्ञेयः शङ्कया प्रत्ययेन वा[3] ।
असत्संसर्गतः शङ्का प्रत्ययोऽन्याङ्कदर्शनात् ॥ १२६४ ॥

प्रथमं स्याद् ऋणादानं निक्षेपस्तदनन्तरम् ।
अस्वामिविक्रयश्चैव तृतीयं परिकीर्तितम् ॥ १२६५ ॥

---

१ B मदोन्मितः । २ BCE शूद्रस्यापि, D शूद्रस्यापि न कर्तव्यो व्यवहारवि° । ३ D तथा ।

सम्भूय च समुत्थानं चतुर्थं परिभाषितम् ।
पञ्चमं दत्तमाख्यातं षष्ठं दत्तापहारकम् ॥ १२६६ ॥

सप्तमं वेतनादानं संविल्लङ्घनमष्टमम् ।
क्रयविक्रयानुशयौ नवमं दशमं तथा ॥ १२६७ ॥

एकादशं तथा प्रोक्तं विवादः स्वामिपालयोः ।
स्वामिभृत्यविवादश्च द्वादशं समुदाहृतम् ॥ १२६८ ॥

त्रयोदशं समाख्यानं सीमाविवदनं बुधैः ।
निरूपितं बुधैरत्र वाक्पारुष्यं चतुर्दशम् ॥ १२६९ ॥

उक्तं पञ्चदशं [1]ऽर्दण्डपारुष्यसंज्ञितम् ।
स्तेयं षोडशमाख्यातमृषिभिस्तत्त्वदर्शिभिः ॥ १२७० ॥

पदं सप्तदशं नाम साहसं मद्गिरितम् ।
अष्टादशं समादिष्टं स्त्रीसङ्ग्रहणसंज्ञकम् ॥ १२७१ ॥

एकोनविंशं सम्प्रोक्तं स्त्रीपुंधर्मो विचारकैः ।
दायभागाभिधानं च तत् स्याद् विंशतिमं पदम् ॥ १२७२ ॥

एकविंशं तथा द्यूतं द्वाविंशं तु समाह्वयम् ।
व्यवहारपदान्येतान्याह सोमेश्वरो नृपः ॥ १२७३ ॥

इति व्यवहारपदानि ।

स्वयं नोत्पादयेत् कार्यं समर्थः पृथिवीपतिः ।
नाददीत तथोत्कोचं दत्तं कार्यार्थिना नृपः ॥ १२७४ ॥

विवादायागतं पृच्छेत् सभायां पुरतः स्थितम् ।
किं कार्यं किं च दुःखं ते त्यक्तशङ्को निवेदय ॥ १२७५ ॥

निरूपिते पुनः पृच्छेत् केन कस्मिन् कुतः कथम् ।
तस्मात् तव कृतं ब्रूहि सत्यमेव समागतः ॥ १२७६ ॥

१ BCE °पहारि° । २ D °संज्ञितं ।

सभ्यैः सह समालोच्य यद् न्याय्यं यथा भवेत् ।
प्रत्यर्थिनस्तथाऽऽह्वानं लेखैर्दूतैश्च कारयेत् ॥ १२७७ ॥

आहूतो यदि नागच्छेद् व्याधितो दुःखितोऽथवा ।
निरुद्धो विषमस्थो वा क्रियाऽव्यग्रो ज्वरन्नपि ॥ १२७८ ॥

स्वामिकार्यपरो वाऽपि नृपकार्यरतोऽथवा ।
मत्तो वाऽथ प्रमत्तो वा तथाप्येष न दुष्यति ॥ १२७९ ॥

कुलीना परभार्या च युवतिश्च प्रसूतिका ।
रजस्वला पक्षहीना नाह्वातव्या सभां प्रति ॥ १२८० ॥

अर्थिप्रत्यर्थिवाक्यानि लेखयित्वा विचारयेत् ।
देशकालानुसारेण हेतुभिश्च पृथग्विधैः ॥ १२८१ ॥

लिखितात् साक्षितो भुक्तेः प्रमाणत्रितयादतः ।
विचारयेन्महीपालः स्मृतिशास्त्रानुसारतः ॥ १२८२ ॥

एतैः प्रमाणैर्हीनस्य दिव्यं देयं महीभुजा ।
तच्च देयं वयोऽवस्था-देश-कालानुसारतः ॥ १२८३ ।

प्रमाणं मानुषं यत्र दुर्लभत्वेन वर्तते ।
तदा दिव्यं प्रदेयं स्यान्न देयं मानुषे सति ॥ १२८४ ॥

शङ्कितानां नरेन्द्रेण कथितानां च तस्करैः ।
शुद्धिमन्विच्छतां तस्य दिव्यं देयं विना शिरः ॥ १२८५ ॥

प्रमाणैर्निश्चिते वाऽपि दिव्यैर्वाऽपि विचारिते ।
युक्त्या दण्डं नृपः कुर्याद् यथादोषानुसारतः ॥ १२८६ ॥

विषम्बु(?)-दन्ति-भुजग-शस्त्रानल-जलादिभिः ।
पापानां प्राणहरणं वधदण्डः प्रकीर्तितः ॥ १२८७ ॥

केशानां कर्णयोरक्ष्णोर्नासिकायास्तथैव च ।
जिह्वायाः करयोस्तद्वदङ्गुलीनां नखस्य च ॥ १२८८ ॥

पादयोरेवमादीनामङ्गानां छेदनं च यत् ।
अपराधानुसारेण छेददण्डः स उच्यते ॥ १२८९ ॥

बन्धनं ताडनं वाचा रूक्षया भर्त्सनं तथा ।
एवंविधप्रकारोऽपि क्लेशदण्डः प्रकीर्तितः ॥ १२९० ॥

पणानां[1] शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं चैव चोत्तमः ॥ १२९१ ॥

विवादेन समः क्वापि द्विगुणः क्वापि कथ्यते ।
त्रिगुणो वा क्वचित् प्रोक्तः क्वचिदुक्तश्चतुर्गुणः ॥ १२९२ ॥

सर्वस्वस्याधिकः क्वापि दमः सर्वस्वमेव वा ।
दोषद्रव्यानुसारेण दण्डोऽर्थहरणः स्मृतः ॥ १२९३ ॥

दण्डो रक्षति मर्यादां दण्डो धर्मं प्रवर्त्तयेत् ।
निवारयेदधर्माच्च तस्माद् दण्डं प्रयोजयेत् ॥ १२९४ ॥

दण्डहीने यतो राष्ट्रे मात्स्यो न्यायः प्रवर्तते ।
तस्माद् दण्डं प्रयुञ्जीत दुष्टानां धार्मिको नृपः ॥ १२९५ ॥

दण्डपातभयाल्लोको धर्मे तिष्ठति यन्त्रितः ।
करीव विजयो मत्तोऽप्यङ्कुशेन वशीकृतः ॥ १२९६ ॥

तीव्रदण्डभयाल्लोके भृशमुद्विजते जनः ।
तस्मान्मृदुप्रयोगेण प्रजापालनमाचरेत् ॥ १२९७ ॥

यथोक्तदण्डविन्यासाद् भूपतेर्धर्मचारिणः ।
यशो धर्मस्तथा राष्ट्रं कोशश्च परिवर्धते ॥ १२९८ ॥

---

१ E मतः ।

एवमङ्गानि राज्यस्य सप्त शक्तित्रयं तथा ।
षाड्गुण्यं च तथा प्रोक्तमुपायश्च चतुर्विधः ॥ १२९९ ॥

राज्यस्थैर्यनिमित्तानि प्राप्तराज्यस्य भूपतेः ।
विंशतिः सोमभूपालः कृतवान् नीतिकोविदः ॥ १३०० ॥

इति दण्डाध्यायः ॥ २० ॥

इति महाराजाधिराज-सत्याश्रयकुलतिलक-चालुक्याभरण-श्रीमद्भूलोक-
श्रीसोमेश्वरदेवविरचिते मानसोल्लासेऽभिलषितार्थचिन्तामणौ
राज्यस्थिरीकरणोपायकथने द्वितीयं प्रकरणम् ॥



# Gaekwad's Oriental Series.

CRITICAL EDITIONS OF UNPRINTED SANSKRIT WORKS, EDITED BY COMPETENT SCHOLARS AND PUBLISHED BY THE CENTRAL LIBRARY, BARODA.

| | | Rs. a. |
|---|---|---|
| 1. | Kavyamimamsa by Rajasekhara. Re-issue. 1924 ... .. ... | 2-4 |
| 2 | Naranarayanananda by Vastupala, ed. by C. D. Dalal, 1926 ... | 1-4 |
| 3. | Tarkasamgraha by Anandajnana or Anandagiri, edited by T. M. Tripathi, B. A. 1917 ... ... ... ... ... ... ... | 2-0 |
| 4. | Parthaparakrama by Prahladanadeva, ed. by C. D. Dalal, 1917 ... | 2-6 |
| 5. | Rashtraudhavamsa-Mahakavya by Rudrakavi, edited by E. Krishnamacharya. Introduction by C. D. Dalal, M. A. 1917 ... ... | 1-12 |
| 6. | Linganusasana by Vamana, edited by C. D. Dalal, M. A. 1918 ... | 0-8 |
| 7. | Vasantavilasa by Balachandrasuri, edited by C. D. Dalal, 1917 ... | 1-8 |
| 8. | Rupakashatka by Vatsaraja, edited by C. D. Dalal, M. A. 1918 ... | 2-4 |
| 9. | Mohaparajaya by Yasahpala, edited by Muni Chatur Vijayaji. Introduction and appendices by C. D. Dalal, M. A. 1918... ... | 2-0 |
| 10. | Hammiramadamardana by Jayasimhasuri, edited by C. D. Dalal, M. A. 1920 ... ... ... ... ... ... | 2-0 |
| 11. | Udayasundarikatha by Soddhala, edited by C. D. Dalal, M. A. and E. Krishnamacharya, 1920 ... ... ... ... ... ... | 2-4 |
| 12. | Mahavidyavidambana by Bhatta Vadindra, edited by M. R. Telang, 1920 ... ... ... ... ... ... ... ... ... | 2-8 |
| 13. | Prachinagurjarakavyasamgraha: collection of Gujarati Poems, 12th to 15th centuries: edited by C. D. Dalal, M. A. 1920 ... | 2-4 |
| 14. | Kumarapalapratibodha by Somaprabhacharya, edited by Muni Jinavijayaji, 1920 ... ... ... ... ... ... ... ... | 7-8 |
| 15. | Ganakarika by Bhasarvajna, edited by C. D. Dalal, M. A. 1920 ... | 1-4 |
| 16. | Sangitamakaranda by Narada, edited by M. R. Telang, 1920 ... | 2-0 |
| 17. | Kavindracharya's List: List of works in the collection of Kavindracharya, a 17th century pandit: edited by R. A. Shastry, with a foreword by Dr. Ganganatha Jha, 1921 ... ... ... ... | 0-12 |
| 18. | Varahagrihyasutra, edited by Dr. R. Shama Shastry 1921 ... ... | 0-1 |
| 19. | Lekhapaddhati: Specimen Sanskrit letters, etc, 8th to 15th centuries: edited by C. D. Dalal, M. A. and G. K. Shrigondekar, M. A., 1925 ... ... ... ... ... ... ... ... | 2-0 |

0. **Panchamikaha** or Bhavisayattakaha by Dhanapala, edited by C. D. Dalal, M. A. and Dr. P. D. Gune, M. A., PH. D. 1923 ... ... 6-0
1 **A Descriptive Catalogue** of the important palm-leaf and paper Mss in the Bhandars at Jaisalmere, compiled by C. D. Dalal, M. A. and edited by L. B. Gandhi, 1924 ... ... ... ... ... 11-0
2-23 **Parasuramakalpasutra** with commentary by Ramesvara and Paddahati by Umananda, edited by A. Mahadeva Shastry, B. A. Director Adyar Library. 2 vols. 1923 ... ... ... ... 11-8
4. **Tantrarahasya**, edited by Dr. R. Shama Shastry, B. A., PH. D. Curator, Government Oriental Library, Mysore, 1923 ... ... 1-8
25. **Samarangana**: a work on architecture by King Bhojadeva: edited by Mahamahopadhaya T. Ganapati Shastri, PH. D., M. R. A. S. 2 vols.-vol. I. 1924 ... ... ... ... ... ... ... 5-0
26. **Sadhanamala**, edited by Benoytosh Bhattacharyya, M. A. Illusd. 2 vols-vol I. 1925 ... ... ... ... ... ... ... 6-0
27. **Catalogue of Sanskrit MSS in the Central Library Baroda**, Compiled by G. K. Shrigondekar, M. A. and K. S. Ramaswami Shastri Siromani. In 12 vols-vol I ( Vedic ). 1925 ... ... 6-0
28. **Manasollasa** *alias* Abhilasitarthachintamani by Chalukya Somesvara, edited by G. K. Shrigondekar, M. A. 3 vols-vol I. 1925 ... ... 2-8

## BOOKS IN THE PRESS.

1. **Tattvasamgraha**, edited by E. Krishnamacharya.
2. **Nyayapravesa**, edited by Principal A. B. Dhruva, M. A., LL. B.
3. **Natyasastra**, edited by M. Ramkrishna Kavi, M. A. Illustrated. 4 vols.
4. **Advayavajrasamgraha**, edited by Mahamahopadhyaya Haraprasad Shastri, M. A., C. I. E.
5. **Kalpadrumakosa**, edited by Ramavatara Sarma, M. A., Sahityacharyya.
6. **Nalavilasa**, edited by G. K. Shrigondekar M. A. and L. B. Gandhi.
7. **Apabhramsakavyatrayi**, edited by L. B. Gandhi.
8. **Manavagrhyasutra** edited by Ramakrishna Harshaji Shastri, of Ahmedabad.

## JUST PUBLISHED.

**Supplement ( or Khatimae ) to the Mirat-Ahmadi**, translated from the Persian of Ali Mahamad Khan, the last Mogul Dewan of Gujarat, by Syed Nawabali, M. A., and C. N. Seddon, I. C. S. (retired) with notes, appendices and 3 illustrations. 270 pages, demy 8vo. cloth. 1925. Rs. 9.